फलाभिसंधिपूर्वकं सकामं कर्माचरद्भिरस्माभिः परमार्थहेतुभूतं निष्कामं कर्म कदापि नाचरितमित्याह—

**क्षान्तं न क्षमया गृहोचितसुखं त्यक्तं न संतोषतः**
**सोढा दुःसहशीतवाततपनाः क्लेशान्न तप्तं तपः ।**
**ध्यातं वित्तमहर्निशं नियमितप्राणैर्न शंभोः पदं**
**तत्तत्कर्म कृतं यदेव मुनिभिस्तत्तत्फलैरञ्चितम् ॥ १३ ॥**

क्षान्तमिति ॥ क्षमया हेतुना परदत्तदुःखादिकं न क्षान्तं न सोढम् । मयेति शेषः । एवं सर्वत्र । किंतु भयादिहेतुना क्षान्तमित्यर्थः । गृहे उचितं योग्यं सुखं संतोषतः संतोषेण न त्यक्तं किंतु पराधीनत्वादिना त्यक्तम् । दुःसहाः शीतं शैत्यं वातो वायुः तपन ऊष्मा च ते सोढाः क्षान्ताः परंतु क्लेशाद्दुःखात्तपो न तप्तम् । अहर्निशं वित्तं द्रव्यं ध्यातं चिन्तितं परंतु नियमिता ये प्राणास्तैः शम्भोः पदं न ध्यातम् । किंतु तत्तत्कर्म कृतम् । तत्किम् । यदेव मुनिभिस्तत्तत्फलैस्तेषां तेषां कर्मणां तानि तानि वा फलानि तैरञ्चितं पूजितम् । आदरपूर्वकं कृतमिति यावत् । शार्दूलविक्रीडितं वृत्तम् ॥

आमरणपर्यन्तं केनापि प्रकारेण तृष्णापूर्तेरभावात्तद्विषये यत्नो न कार्य इति सूचयन्नाह—

**वलिभिर्मुखमाक्रान्तं पलितैरङ्कितं शिरः ।**
**गात्राणि शिथिलायन्ते तृष्णैका तरुणायते ॥ १४ ॥**

वलिभिरिति ॥ मुखमाननं वलिभिराक्रान्तं व्याप्तम् । शिरो मस्तकं पलितैः सितकेशैरङ्कितं चिह्नितमभूदिति शेष उभयत्रापि । गात्राणि हस्ताद्यवयवाः शिथिलायन्ते । स्वक्रियाकरणेऽसमर्था भवन्तीत्यर्थः । परंतु एका तृष्णा तरुणायते तरुणीवाचरति । कदापि शान्ता न भवतीत्यर्थः । अनुष्टुब् वृत्तम् ॥

कर्मवशात्त्वस्मिन्प्राप्तं दौर्गत्यं न शोचनीयमिति श्लेषमर्यादया चन्द्रसूर्यदृष्टान्तपूर्वकं सूचयन्नाह—

**येनैवाम्बरखण्डेन संवीतो निशि चन्द्रमाः ।**
**तेनैव च दिवा भानुरहो दौर्गत्यमेतयोः ॥ १५ ॥**

येनैवेति ॥ येनैवाम्बरखण्डेन वस्त्रखण्डेन, पक्षे आकाशभागेन । निशि रात्रौ चन्द्रमाः संवीतो वेष्टितस्तेनैव अम्बरखण्डेन दिवा दिवसे भानुः सूर्योऽपि संवेष्टितो भवति । एतयोः सर्वजगन्निर्वाहकरणयोरपि सूर्याचन्द्रमसो-

दौर्गत्यं एकवस्त्रखण्डेन निर्वाहकारणरूपं दैन्यमस्ति । अहो इत्याश्चर्यमेतत् । एवं समर्थयोरप्येतयोरेतादृशदौर्गत्यसत्वे काऽस्माकं कथेति भावः । अनुष्टुब् वृत्तम् ॥

पुरुषस्य स्वयमेव विषयत्यागोऽत्यन्तसुखहेतुरिति सूचयन्नाह—

**अवश्यं यातारश्चिरतरमुषित्वापि विषया**
**वियोगे को भेदस्त्यजति न जनो यत्स्वयममून् ।**
**व्रजन्तः स्वातन्त्र्यादतुलपरितापाय मनसः**
**स्वयं त्यक्ता ह्येते शमसुखमनन्तं विदधति ॥ १६ ॥**

अवश्यमिति ॥ विषया भोग्यपदार्थाश्चिरतरं बहुकालमुषित्वापि वासं कृत्वापि अवश्यं यातारो गन्तारो गमिष्यन्त्येव तेषामनित्यत्वात् । एवं सति बुद्ध्या विषयत्यागे स्वयं गमने च वियोगे विश्लेषे को भेदः । न कोऽपीत्यर्थः । यद्येन भेदेन जनः स्वयममून् विषयान्न त्यजति । विषयाणां इच्छया गमने पुरुषेण बुद्ध्या त्यागे वियोगे भेदाभावेऽपि स्वयं गमने दुःखहेतुत्वं बुद्ध्या त्यागे च सुखहेतुत्वमिति सूचयितुं फलभेदं दर्शयति—व्रजन्त इति । एते प्रसिद्धा विषयाः स्वातन्त्र्यात्स्वेच्छया व्रजन्तो गच्छन्तः सन्तो मनसोऽतुलोऽनुपमो यः परितापस्तस्मै भवन्ति । मनसो दुःखदा भवन्तीत्यर्थः । स्वयं पुरुषेण त्यक्तास्तु अनन्तमपारं शमसुखं शान्तिसुखं विदधति कुर्वते । हि निश्चयेन । तस्माद्विषयत्यागस्य शान्तिसुखहेतुत्वात्तत्त्यागोऽवश्यं पुरुषेण कर्तव्य इति भावः । शिखरिणी वृत्तम् ॥

तृष्णाशान्तेरत्यन्तसुखहेतुत्वमाह—

**विवेकव्याकोशे विदधति शमे शाम्यति तृषा**
**परिष्वङ्गे तुङ्गे प्रसरतितरां सा परिणतिः ।**
**जराजीर्णैश्वर्यग्रसनगहनाक्षेपकृपण-**
**स्तृषापात्रं यस्यां भवति मरुतामप्यधिपतिः ॥ १७ ॥**

विवेकेति ॥ विवेकस्य व्याकोशो विकसनं यस्मिंस्तस्मिन् शमे विदधति कुर्वति सति तुङ्गे उन्नते तृषायाः परिष्वङ्ग आश्लेषे शाम्यति सति, सा परिणतिः, सुखविशेषरूपः परिणामः प्रसरतितरामतिशयेन विस्तारं प्राप्नोति । सा का । यस्यां परिणतौ विषये जरया जीर्णमैश्वर्यं, ग्रसनं अन्नादिभक्षणं तन्निमित्तो गहनो गम्भीरो य आक्षेपो निन्दा च ताभ्यां कृपण एवंविधो म-

रुतां देवानामधिपतिरिन्द्रोऽपि यस्यां परिणतौ तृषापात्रं तृष्णाभाजनं भवतीति । यस्यां परिणतौ विषये साक्षादिन्द्रोऽपि स्पृहां करोतीत्यर्थः । शिखरिणी वृत्तम् ॥

विषयवासनापरित्यागस्यात्यन्तदुर्घटत्वमाह—

**भिक्षाशनं तदपि नीरसमेकवारं**
**शय्या च भूः परिजनो निजदेहमात्रम् ।**
**वस्त्रं च जीर्णशतखण्डमयी च कन्था**
**हाहा तथापि विषया न परित्यजन्ति ॥ १८ ॥**

भिक्षेति ॥ भिक्षाया अशनं भोजनं, तदपि नीरसं रसरहितं, तदपि एकवारं न द्विवारम्, तथा शय्या च शयनं च भूर्भूमिः न तूलादि, तथा परिजनः परिवारो निजदेहमात्रं स्वदेहमात्रं न स्त्रीपुत्रादि; तथा वस्त्रमाच्छादनं जीर्णानि यानि शतखण्डानि तत्प्रचुरा कन्था न तदतिरिक्तं किंचित् । तथापि एवं सत्यपि विषया भोग्यपदार्थवासना न परित्यजन्ति । हाहा । अतिकष्टमित्यर्थः । वसन्ततिलका वृत्तम् ॥

कविजनैरतिरमणीयत्वेन वर्णितमपि स्त्रीणां रूपं विचारे कृते वस्तुतोऽपि निन्द्यमिति वर्णयन्नाह—

**स्तनौ मांसग्रन्थी कनककलशावित्युपमितौ**
**मुखं श्लेष्मागारं तदपि च शशाङ्केन तुलितम् ।**
**स्रवन्मूत्रक्लिन्नं करिवरकरस्पर्धि जघनं**
**मुहुर्निन्द्यं रूपं कविजनविशेषैर्गुरुकृतम् ॥ १९ ॥**

स्तनाविति ॥ मुहुः सदैव निन्द्यं कुत्सितं रूपं कविजनविशेषैः कविश्रेष्ठैर्गुरु महत् । अतिरमणीयमिति यावत् । कृतं कल्पितमित्यर्थः । कथमित्याह—स्तनाविति । वस्तुतो मांसस्य ग्रन्थी एवंविधौ स्तनौ कुचौ कनकस्य सुवर्णस्य कलशौ घटाविति उपमितौ । कनककलशोपमानेन वर्णितावित्यर्थः । तथा वस्तुतः श्लेष्मणोऽगारं गृहं एवंविधं यन्मुखमाननं तदपि च शशाङ्केन तुलितम् । चन्द्रोपमानेन वर्णितमिति यावत् । तथा वस्तुतः स्रवत्प्रस्रवद्यन्मूत्रं तेन क्लिन्नमार्द्रं यज्जघनं कटिपुरोभागः तदेव करिवरो हस्तिश्रेष्ठस्तस्य करः शुण्डादण्डस्तं स्पर्धते तच्छीलम् । तत्सदृशत्वेन वर्णितमिति यावत् । कविजनैरतिरम्यत्वेन वर्णितस्यापि स्त्रीरूपस्यातिकुत्सितत्वेन तद्विषयेऽत्यन्ताभिलाषो न करणीय इति भावः । शिखरिणी वृत्तम् ॥

मोहस्य दुर्निवारत्वं वर्णयन्नाह—

**अजानन्माहात्म्यं पततु शलभस्तीव्रदहने**
**स मीनोऽप्यज्ञानाद्बडिशयुतमश्नातु पिशितम्।**
**विजानन्तोऽप्येतद्वयमिह विपज्जालजटिला-**
**न्न मुञ्चामः कामानहह गहनो मोहमहिमा ॥ २० ॥**

अजानन्निति ॥ शलभः पतङ्गः माहात्म्यमर्थादग्नेः अजानन्न जानन्सन् तीव्रस्तीक्ष्णो दहनोऽग्निस्तस्मिन्पततु, तथा स प्रसिद्धो मीनो मत्स्योऽपि पिशितं मांसं बडिशेन मत्स्यवेधनेन युतमिति अज्ञानादश्नाति चेदश्नातु भक्षयतु। वयं तु इह संसारे विशेषेण विजानन्तो ज्ञानवन्तोऽपि विपज्जालेनापज्जालेन जटिलान्व्याप्तान्कामान् विषयाभिलाषान्न मुञ्चामो न त्यजामः। किंत्वाश्रयामः, एतद्विषयाश्रयणं गहनो दुर्ज्ञेयो मोहस्य महिमास्ति। अहहेति खेदे। शिखरिणी वृत्तम् ॥

खलानामविनीतं चरितमतिदुःसहमित्याह—

**फलमलमशनाय स्वादु पानाय तोयं**
**शयनमवनिपृष्ठे वल्कले वाससी च।**
**निधुवनमधुपानभ्रान्तसर्वेन्द्रियाणा-**
**मविनयमनुमन्तुं नोत्सहे दुर्जनानाम् ॥ २१ ॥**

फलमिति ॥ अशनाय भोजनाय फलमलं पर्याप्तम्। ओदनादि नापेक्षितमित्यर्थः। अलमित्यस्योत्तरत्राप्यन्वयः। पानाय तृषाशान्तये स्वादु मृष्टं तोयमुदकं न मद्यादि। अवनिपृष्ठे भूपृष्ठे शयनं न पर्यङ्कादौ। वाससी वस्त्रे वल्कले न कौशेयादी। अतो निधुवनं मैथुनमेव मधु मद्यं तस्य पानं तेन, यद्वा निधुवनं मधु च ताभ्यां, "धनलवमधु" इति पाठे धनस्य लवो लेशः स एव मधु तस्य पानं तेन भ्रान्तानि सर्वाणि इन्द्रियाणि येषां तेषां दुर्जनानामविनयमनम्रतापूर्वकमाचरणं अनुमन्तुमनुमोदितुमहं नोत्सहे। समर्थो न भवामीत्यर्थः। वन्यफलादिना जीवनादिकं वरं न तु खलसहवास इति भावः। मालिनी वृत्तम् ॥

अधुनातनानां जनानां जगत्संबन्धि यत्किंचिदंशे स्वामित्वमुपलभ्य तद्विषय उन्मादपूर्वकमभिमानकरणमनुचितमित्याह—

**विपुलहृदयैर्धन्यैः कैश्चिज्जगज्जनितं पुरा**
**विधृतमपरैर्दत्तं चान्यैर्विजित्य तृणं यथा।**

**इह हि भुवनान्यन्ये धीराश्चतुर्दश भुञ्जते**
**कतिपयपुरस्वाम्ये पुंसां क एष मदज्वरः ॥ २२ ॥**

विपुलेति ॥ विपुलं महत् हृदयं येषां तैः । उदारमनस्कैरिति यावत् । धन्यैः पुण्यवद्भिः कैश्चिद्ब्रह्मादिभिः पुरा इदं जगज्जनितमुत्पादितम् । अपरैर्विष्णवादिभिर्विधृतं धारितम् । पालितमिति यावत् । अन्यैः परशुरामादिभिश्च विजित्य जित्वा तृणं यथा तृणमिव । यथाशब्द इवार्थे । "व वा यथा तथैवैवं साम्ये" इत्यमरः । कश्यपादिभ्यो दत्तम् । इह हि अस्मिन्लोकेऽन्ये धीरा वलिप्रभृतयश्चतुर्दश भुवनानि भुञ्जत उपभुञ्जते । अत्र भुजधातुरुपभोगार्थो न पालनार्थः । तथापि कतिपयानि च पुराणि नगराणि तेषां स्वाम्ये स्वामित्वे सति पुंसां एष मदज्वरः कः । अत्यन्तमयोग्य इत्यर्थः । ब्रह्मादिभिरपि जगज्जननादिकार्ये कृतेऽपि तादृश उन्मादो न कृतस्तदपेक्षया क्षुद्रजनानां जगत्संबन्धि यत्किंचिदंशलाभेन तद्विषय उन्मादपूर्वकमभिमानकरणमनुचितमिति किमु वक्तव्यमिति भावः । हरिणी वृत्तम् । "रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा" इति तल्लक्षणात् ॥

कंचिद्राजानं प्रति कस्यचिद्वैराग्यवतः पुरुषस्योक्तिवर्णनेन निःस्पृहत्वस्य श्रेष्ठत्वं सूचयन्नाह—

**त्वं राजा वयमप्युपासितगुरुप्रज्ञाभिमानोन्नताः**
**ख्यातस्त्वं विभवैर्यशांसि कवयो दिक्षु प्रतन्वन्ति नः ।**
**इत्थं मानद नातिदूरमुभयोरप्यावयोरन्तरं**
**यद्यस्मासु पराङ्मुखोऽसि वयमप्येकान्ततो निःस्पृहाः ॥ २३ ॥**

त्वमिति ॥ हे राजन्, त्वं राजा राजत्वेनोन्नतश्चेत् वयमपि उपासितः सेवितो यो गुरुस्तस्माल्लब्धा या प्रज्ञा कार्याकार्यविवेकवती बुद्धिस्तया योऽभिमानो गर्वस्तेनोन्नता उन्नतिं प्राप्ताः स्मः । त्वं विभवैर्गजतुरगाद्यैश्वर्यैः ख्यातोऽसि, नोऽस्माकमपि यशांसि कवयो दिक्षु प्रतन्वन्ति विस्तारयन्ति । त्वमिव वयमपि लोके प्रसिद्धा इत्यर्थः । इत्थं पूर्वोक्तप्रकारेण हे मानद मानं द्यति खण्डयति तत्संबुद्धिः हे मानद, उभयोरप्यावयोरन्तरं भेदोऽतिदूरमतिशयेन नास्ति । तस्माद्यदि त्वमस्मासु विषये पराङ्मुख आदररहितस्तर्हि वयमपि एकान्ततोऽत्यन्तं निःस्पृहा वाञ्छारहिताः स्मेति शेषः । अत्यन्तनिःस्पृहत्वाद्वयं त्वदीयादरापेक्षां सुतरां न कुर्म इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥

लोके भूपतित्वाभिमानोऽतितुच्छत्वाद्वृथैवेत्याह—

**अभुक्तायां यस्यां क्षणमपि न यातं नृपशतै-**
**र्भुवस्तस्या लाभे क इव बहुमानः क्षितिभुजाम् ।**
**तदंशस्याप्यंशे तदवयवलेशेऽपि पतयो**
**विषादे कर्तव्ये विदधति जडाः प्रत्युत मुदम् ॥ २४ ॥**

अभुक्तायामिति ॥ यस्यां क्षणमपि क्षणमात्रकालमपि अभुक्तायां सत्यां नृपशतैरनेकनृपैर्न यातं न गमनं कृतं, किं तु, अनन्ताः पूर्वे नृपतयो भुक्त्वैव याताः । न तु चिरकालं स्थिता इत्यर्थः । अचिरस्थायिसंभोगवत्यास्तस्या लाभे न किंचित्फलमित्याह—भुव इति । तस्याः पृथिव्या लाभे क्षितिभुजां क इव बहुमानः । न कोऽपीत्यर्थः । सत्यपि संभोगलाभे न सर्वस्याः किं तु तल्लेशमात्रस्य सः । तथा च तल्लाभेन महान्संतोषो न विधेय इत्याह—तदंशस्येति । तस्याः पृथिव्या अंशस्याप्यंशे तथा तस्यांशस्यावयवलेशस्तस्मिन् वयं पतयः स्वामिन इति जडा मूर्खाः विषादे कर्तव्ये सति प्रत्युत विपरीतं मुदं हर्षं विदधति कुर्वते । यत्किंचिदंशे पतित्वलाभेन हर्षकरणमनुचितमिति भावः । शिखरिणी वृत्तम् ॥

परिच्छिन्नैश्वर्यवद्भ्यो राजभ्यो धनादियाचनमत्यन्तमनुचितमिति सूचयंस्तेभ्यो धनाकाङ्क्षिणः पुरुषान्निन्दयन्नाह—

**मृत्पिण्डो जलरेखया वलयितः सर्वोऽप्ययं नन्वणु-**
**रङ्गीकृत्य स एव संयुगशतै राज्ञां गणैर्भुज्यते ।**
**नो दद्युर्ददतेऽथवा किमपि ते क्षुद्रा दरिद्रा भृशं**
**धिग्धिक्तान्पुरुषाधमान्धनकणान्वाञ्छन्ति तेभ्योऽपि ये ॥ २५ ॥**

मृत्पिण्डेति ॥ सर्वोऽप्ययं मृत्पिण्डः पृथ्वीरूपो यतो जलरेखया समुद्रेण वलयितो वेष्टितोऽस्तीति शेषः । "परिवृत" इति पाठेऽपि स एवार्थः । ननु इति वितर्के । अयं अणुरल्पोऽस्ति न त्वपरिच्छिन्नः । स एव संयुगशतैः संग्रामशतैरङ्गीकृत्य स्वीकृत्य राज्ञां गणैः समूहैर्भुज्यते । "भागीकृत्य तमेव संयुगशतै राज्ञां गणा भुञ्जते" इति पाठे संयुगशतैस्तमेव भागीकृत्य विभागं कृत्वा राज्ञां गणाः समूहा भुञ्जत इत्यर्थः । ते राजानः पूर्वं नो दद्युरथवेदानीं किमपि यत्किंचिद्ददते अतएव क्षुद्रास्तुच्छा दरिद्राः कृपणाः सन्ति । तथापि ये पुरुषास्तेभ्योऽपि धनकणान्द्रव्यलेशान्वाञ्छन्ति । "धनलवम्" इत्यपि पा-

ठः । तान्पुरुषाधमान्पुरुषापसदान् धिग्धिगिति । धिग्योगे द्वितीया । ते पुरुषा अतिनिन्द्या इत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥

विद्वदवमानिनः केवलं नटादिसत्कारकारिणः कुत्सितस्य राज्ञः सेवाया अत्यन्तानौचित्यमिति सूचयन्नाह—

**न नटा न विटा न गायना न परद्रोहनिवद्धवुद्धयः ।**
**नृपसद्मनि नाम के वयं कुचभारानमिता न योषितः ॥ २६ ॥**

नेति ॥ वयं नटाः शैलूषा न । "शैलालिनस्तु शैलूषाः" इत्युपक्रम्य "भरता इत्यपि नटाः" इत्यमरः । विटा जाराः । परस्त्रीवशीकरणे समर्था इति यावत् । "वेश्यापतिर्भुजङ्गः स्याद्विटः पाल्लुविकः स्मृतः" इति हलायुधः । गायना गायन्ती ते गायना गानकर्तारः । "ण्युट् च" इति कर्तरि ण्युट् । परेषां द्रोहे निबद्धा बुद्धिर्येषां ते न । "न च सत्येतरपक्षपातिनः" इति पाठे सत्यादितरदसत्तस्मिन्पक्षपातोऽस्त्येषां ते । असत्पक्षपातिन इति यावत् । कुचभारेण स्तनभारेण आनमिता नम्रा योषितः स्त्रियोऽपि न, "स्तनभारोन्नमिता" इत्यपि पाठः । अतो नृपसद्मनि राजगृहे उक्तानामेतेषां मध्ये वयं के । न केऽपीत्यर्थः। कथमपि न मानार्हा इत्यर्थः । यत्र राज्ञः सभायां नटादीनामेव संमानार्हत्वं न विदुषां तस्य राज्ञ आराधनमस्मादृशामनुचितमिति भावः । वैतालीयं वृत्तम् । "षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः । न समात्रपराश्रिताकला वैतालीयेऽन्ते रलौ गुरुः" इति ॥

कालवशेन विद्याया उत्तरोत्तरं ह्रासं वर्णयन् मूर्खराजसेवाविषये परमादरमविधाय संसारोच्छेदहेतुभूतां विद्यामेव संपादयेदिति सूचयन्नाह—

**पुरा विद्वत्तासीदुपशमवतां क्लेशहतये**
**गता कालेनासौ विषयसुखसिद्ध्यै विषयिणाम् ।**
**इदानीं तु प्रेक्ष्य क्षितितलभुजः शास्त्रविमुखा-**
**नहो कष्टं सापि प्रतिदिनमधोधः प्रविशति ॥ २७ ॥**

पुरेति ॥ पुरा पूर्वं विद्वत्ता उपशमः शान्तिरस्त्येषां तेषां आसीत् । "अमलिनधियां" इति पाठे न मलिना कामक्रोधादिना कलुषिता धीर्बुद्धिर्येषां तेषामित्यर्थः । क्लेशस्य संसारजन्यदुःखस्य हतिर्नाशस्तस्यै आसीत् । संसारदुःखनाशसमर्थाऽसीदित्यर्थः । असावेव कालेन गता प्राप्तापि सती विषयिणां विषयसंबन्धि यत्सुखं तस्य सिद्ध्यै आसीत् । विषयसुखसिद्धिप्रदै-

वासीदित्यर्थः । इदानीं तु वर्तमानकाले तु क्षितितलं भुञ्जन्ति तान् । क्षितितलभुजो राज्ञः, "क्षितिलवभुज" इति पाठे क्षितेः पृथिव्या लवं लेशम् । एकदेशमिति यावत् । भुञ्जन्ति तानित्यर्थः । शास्त्रविमुखान् शास्त्रपराङ्मुखान् प्रेक्ष्य दृष्ट्वा सापि विद्वत्ता प्रतिदिनमहरहः अधोधः प्रविशति गच्छति । अत्यन्तनीचस्थितिं प्राप्तेत्यर्थः । इत्यहो कष्टम् । विद्यायाः समूलोच्छेददशामालोच्य तद्रक्षणविषये पुरुषेण यत्नोऽवश्यं विधेय इति भावः । शिखरिणी वृत्तम् ॥

जन्मप्रभृति मरणपर्यन्तं श्रद्धापूर्वकं भगवदाराधनं कुर्वतां पुरुषाणामेव जन्मसाफल्यं नेतरेषामिति सूचयन्नाह—

**स जातः कोऽप्यासीन्मदनरिपुणा मूर्ध्नि धवलं**
**कपालं यस्योच्चैर्विनिहितमलङ्कारविधये ।**
**नृभिः प्राणत्राणप्रवणमतिभिः कैश्चिदधुना**
**नमद्भिः कः पुंसामयमतुलदर्पज्वरभरः ॥ २८ ॥**

स जात इति ॥ स पुरुषः कोऽपि जात उत्पन्न आसीत् । सफलजन्मेत्यर्थः । स कः, यस्य धवलं शुभ्रं कपालं शिरोस्थि मदनस्य कामस्य रिपुः शिवस्तेन अलङ्कारस्य भूषणस्य विधिर्विधानं तस्मै । अलंकरणायेति यावत् । उच्चैरुन्नतं यथा स्यात्तथा मूर्ध्नि विनिहितं धृतम् । अधुना सांप्रतं प्राणस्य त्राणे त्राणाय वा प्रवणा नम्रा मतिर्येषां तैरतएव नमद्भिर्नमस्कारं कुर्वद्भिः अन्यैर्जातैः कैश्चिन्नृभिर्हेतुभिः पुंसां इतरजननमनेन संतुष्यतां पुरुषाणामयं प्रत्यक्षतोऽनुभूयमानः अतुलोऽनुपमो दर्पज्वरो गर्वतापस्तस्य भरोऽतिशयः कः अतिकुत्सितः । व्यर्थ इति यावत् । जन्मारभ्य मरणपर्यन्तं श्रद्धापूर्वकं भगवदाराधनमेव कुर्वतां तेन तुष्यता भगवता तेषामेव कस्यचिदवयवस्य शिरसा धारणेनानुगृहीतानामेव जन्मसाफल्यं तदितरेषां कतिपयजननमनमात्रेण संतुष्यतां तेनैव महान्तं गर्वं वहतां केनापि प्रकारेण भगवदननुगृहीतानां जन्मनः सर्वथा वैफल्यमिति भावः । शिखरिणी वृत्तम् ॥

कस्यचिन्निःस्पृहस्य राज्ञा सह संवादमुखेन स्वसाम्यं वदतः पथिकस्य वृत्तान्तं वर्णयन् राजसेवनस्यातितुच्छत्वं सूचयन्नाह—

**अर्थानामीशिषे त्वं वयमपि च गिरामीश्महे यावदित्थं**
**शूरस्त्वं वादिदर्पज्वरशमनविधावक्षयं पाटवं नः ।**
**सेवन्ते त्वां धनान्धा मतिमलहतये मामपि श्रोतुकामा**
**मय्यप्यास्था न चेत्तत्त्वयि मम सुतरामेष राजन् गतोऽस्मि २९**

अर्थानामिति ॥ हे राजन्, त्वमर्थानां द्रव्याणामीशिषे ईशितासि, वयमपि च गिरां वाणीनामीश्महे ईशितारः स्मः । यावत्संपूर्णमित्थमनेन प्रकारेणास्ति। त्वं शूरः शत्रुजये समर्थोऽसि, नोऽस्माकं च वादिनां प्रतिपक्षिणां दर्पज्वरोऽहङ्कारतापस्तस्य शमनविधौ नाशनविधौ अक्षयं निश्चलं पाटवं पटुत्वमस्ति । वादिविजये वरं शूरा इत्यर्थः । धनान्धा धनप्राप्त्यर्थं किं कर्तव्यं किं न कर्तव्यमितिविवेकशून्यास्त्वां सेवन्ते । मतेर्बुद्धेर्मलः कालुष्यं तस्य हतये नाशाय श्रोतुकामा उपनिषदादिश्रोतारो मामपि सेवन्ते, इति संबन्धः । एवं सत्यपि यदि मय्यपि तवाऽस्था न चेत्तर्हि मम त्वयि सुतरां सा नास्ति । हे राजन्, एषोऽहं गतोऽस्मि । एवं साम्योद्भावनं कुर्वता गच्छता निःस्पृहेण पथिकेनेव केनापि पुरुषेणातिगहना राजसेवा न कार्यातितुच्छत्वात्किं तु भगवद्भजनमेव कर्तव्यमिति भावः । स्रग्धरा वृत्तम् ॥

दुर्वृत्तराजादिसेवनेन जीवनापेक्षया भिक्षाशनादिना जीवनं वरमिति सूचयन् कस्यचिद्वैराग्यवत उक्तिमाह—

**अशीमहि वयं भिक्षामाशावासो वसीमहि ।**
**शयीमहि महीपृष्ठे कुर्वीमहि किमीश्वरैः ॥ ३० ॥**

अशीमहीति ॥ वयं भिक्षामेवाशीमहि भुञ्जामहे । आशा दिगेव वासो वस्त्रं वसीमहि परिदध्महे । महीपृष्ठे पृथ्वीतले शयीमहि स्वपिमः । ईश्वरैरैश्वर्ययुक्तैः पुरुषैः किं कुर्वीमहि किं कुर्महे । प्रयोजनाभावादित्यर्थः । अनुष्टुप् वृत्तम् ॥

इह संसारे सुखहेतुभूतानां मानादीनां नाशे सति पुनस्तत्संपादने यत्नमविधाय गङ्गया विराजमाने हिमालयकुञ्जे निवास एव विधेय इत्याह—

**माने म्लायिनि खण्डिते च वसुनि व्यर्थे प्रयातेऽर्थिनि**
**क्षीणे बन्धुजने गते परिजने नष्टे शनैर्यौवने ।**
**युक्तं केवलमेतदेव सुधियां यज्जह्नुकन्यापयः-**
**पूतग्रावगिरीन्द्रकन्दरदरीकुञ्जे निवासः क्वचित् ॥ ३१ ॥**

मान इति ॥ माने म्लायिनि गलिते सति, वसुनि द्रव्ये खण्डिते नष्टे सति अर्थिनि याचके व्यर्थे सत्काररहितं यथा स्यात्तथा प्रयाते गते सति, बन्धुजने क्षीणे सति, परिजने परिवारे गते सति, यौवने तारुण्ये शनैर्मन्दं मन्दं नष्टे सति सुधियां केवलमेतदेव युक्तं योग्यम् । एतत्किम् । जह्नुकन्याया भागीरथ्याः पयसा पूताः पवित्रा ग्रावाणः पाषाणा यस्मिन्नेवंविधो गिरीन्द्रो हिमालयस्तस्य कन्दरा विवरम् । "कन्दराऽङ्कुरे । विवरे च गुहायां च" इति

मेदिनी। तस्मिन् या दरी गुहा तस्यां कुञ्जो लतापिहितप्रदेशस्तस्मिन् क्वचिन्निवासो वसतिरिति यत्। शार्दूलविक्रीडितं वृत्तम्॥

क्लेशवहुलेतरधनिकचेतःप्रसादकरणापेक्षया स्वस्वान्तःप्रसन्नताकरणमत्यन्तसुखप्राप्तिकरमिति स्वचित्तं प्रति बोधयतः कस्यचिदुक्तिमनुवदन्नाह—

**परेषां चेतांसि प्रतिदिवसमाराध्य बहुधा**
**प्रसादं किं नेतुं विशसि हृदय क्लेशकलिलम्।**
**प्रसन्ने त्वय्यन्तः स्वयमुदितचिन्तामणिगुणे**
**विमुक्तः संकल्पः किमभिलषितं पुष्यति न ते॥ ३२॥**

परेषामिति॥ हे हृदय हे मनः, परेषामन्येषां चेतांसि प्रतिदिवसं दिवसंदिवसं प्रति बहुधा बहुप्रकारेणाराध्य संसेव्य प्रसादं प्रसन्नतां नेतुं प्राप्तं क्लेशरूपकलिलं गहनं दुःखमरण्यं वेति यावत्। किं विशसि प्रविशसि। स्वयं उदिताः प्रादुर्भूताश्चिन्तामणेर्गुणा यस्मिन्नेवंविधे त्वयि अन्तरभ्यन्तरे प्रसन्ने सति विमुक्तस्त्यक्तः संकल्पः तेऽभिलषितमिच्छितं किं न पुष्यति। अपि तु सर्वं पुष्यत्येवेत्यर्थः। शिखरणी वृत्तम्॥

प्रसन्नमनसा शिवभक्तिं कुर्वतां पुरुषाणां कदापि दुःखं न भवति किंतु सर्वदा सुखमेव भवतीति सूचयन्नाह—

**स्थितिः पुण्यारण्ये सह परिचयो हन्त हरिणैः**
**फलैर्मेध्या वृत्तिः प्रतिदिवसतल्पानि दृषदः।**
**इतीयं सामग्री भवति हरभक्तिं स्पृहयतां**
**वनं वा गेहं वा सदृशमुपशान्तैकमनसाम्॥ ३३॥**

स्थितिरिति॥ पुण्यारण्ये पुण्यकारकवने स्थितिः स्थानम्, हन्तेति हर्षे। हरिणैर्मृगैः सह परिचयः संबन्धः, फलैर्वन्यफलैर्मेध्या पवित्रा वृत्तिर्जीविका, दृषदः पाषाणाः प्रतिदिवसं तल्पानि शय्याः, इति अनेन प्रकारेणेयं हरस्य शिवस्य भक्तिं स्पृहयतामिच्छतां उपशान्तं रागादिरहितमेकं केवलं मनो येषां तेषां पुरुषाणां सामग्री परिकरो भवति। अतस्तेषां वनमरण्यं गेहं गृहं वा सदृशं तुल्यमस्तीति शेषः। वृत्तं पूर्वोक्तमेव॥

आशुविनाशिनां प्राणानां रक्षणार्थं राजादीनामग्रे स्वगुणख्यापनादिकमनुचितमिति सूचयन्नाह—

**अमीषां प्राणानां तुलितबिसिनीपत्रपयसां**
**कृते किं नास्माभिर्विगलितविवेकैर्व्यवसितम्।**

**यदाढ्यानामग्रे द्रविणमदनिःशङ्कमनसां**
**कृतं वीतव्रीडैर्निजगुणकथापातकमपि ॥ ३४ ॥**

अमीषामिति ॥ विगतो विवेको येषां तैरस्माभिः बिसिन्याः कमलिन्याः पत्रेषु पयो जलं तुलितं बिसिनीपत्रपयो येषां तेषाम् । अचिरस्थायिनामित्यर्थः । एवंविधानां अमीषां प्राणानां कृते । प्राणरक्षणार्थमित्यर्थः । किं न व्यवसितं न कृतम् । अपितु सर्वमेव कृतमित्यर्थः । यद्यस्मात् द्रविणस्य धनस्य मदेन गर्वेण निःशङ्कं मनो येषां तेषामाढ्यानां धनिकानामग्रे वीता गता व्रीडा लज्जा येषां तैरस्माभिर्निजगुणानां स्वकीयगुणानां कथाकथनं तद्रूपं यत्पातकं तदपि कृतमिति । शिखरिणी वृत्तम् ॥

सततमात्मापकारजनकमेव कर्म कुर्वतः पुरुषस्य पश्चात्तापपूर्वकोत्त्यनुवादेन आत्मसुखजनकमेव कर्म सदा कर्तव्यमिति सूचयन्नाह—

**अनावर्ती कालो व्रजति स वृथा तन्न गणितं**
**दशास्तास्ताः सोढा व्यसनशतसंपातविधुराः ।**
**कियद्व्याचक्षामः किमिव बत नात्मन्यपकृतं**
**किमस्माभिर्यावत्पुनरपि तदेव व्यवसितम् ॥ ३५ ॥**

अनावर्तीति ॥ न आवर्तते न परावर्तते तच्छीलोऽनावर्ती । पुनः परावर्तनरहित इति यावत् । एवंविधः कालः स वृथा निष्फलो व्रजति गच्छति । तन्न गणितम् । तथा व्यसनानां शतानि तेषां संपातः पतनं तेन विधुरा विकलाः । "विधुरं विकले त्रिषु" इति त्रिकाण्डशेषः । तास्ता दशाः सोढा मर्षिताः । कियत् व्याचक्षामः कियद्ब्रूमः । अस्माभिरात्मनि स्वस्मिन्विषये किमिव नापकृतम् । अपि तु सर्वमपकृतमेवेत्यर्थः । बत इति खेदे । यावत्स पूर्णं किं कुत्सितं पुनरपि तदेव व्यवसितं कृतम् । अपकारबुद्ध्या किमपि न त्यक्तमित्यर्थः । शिखरिणी वृत्तम् ॥

कालवशेन विनाशं प्राप्नुवतामचिरस्थायिनां राज्ञां सेवनादि विहाय भगवत्सेवनमेव कर्तव्यमिति सूचयन्नाह—

**भ्रातः कष्टमहो महान्स नृपतिः सामन्तचक्रं च त-**
**त्पार्श्वे तस्य च सापि राजपरिषत्ताश्चन्द्रबिम्बाननाः ।**
**उद्रिक्तः स च राजपुत्रनिवहस्ते बन्दिनस्ताः कथाः**
**सर्वं यस्य वशादगात्स्मृतिपदं कालाय तस्मै नमः ॥ ३६ ॥**

भ्रातरिति ॥ हे भ्रातरिति सुहृद्भावेन संबोधनम् । यः पूर्वं दृष्टोऽस्माभिः

स एव महान् नृपतिः राजा, तस्य पार्श्वे तदेव सामन्तचक्रं माण्डलिकराजमण्डलम्, सापि सैव राजपरिषद्राजसभा, चन्द्रबिम्बवदाननं यासां तास्ता एव स्त्रियः, उद्रिक्त उन्मत्तः स एव राजपुत्रनिवहो राजपुत्रसमूहः, त एव वन्दिनः स्तुतिपाठकाः, ता एव कथा गोष्ठ्यः, एतत्पूर्वोक्तं सर्वं यस्य कालस्य वशात्स्मृतिपदं स्मरणमार्गमगात् । कथाशेषं जगामेत्यर्थः । अहो कष्टम् । तस्मै कालाय नमोऽस्तु । शार्दूलविक्रीडितं वृत्तम् ॥

यस्य स्वीयदेहस्य रक्षणार्थं राजादिसेवनं विधीयते तस्य देहस्यापि विनाशित्वात्तद्विषयेऽप्यास्थां विहाय भगवदाराधने यत्नो विधेय इत्यभिप्रायवानाह—

**वयं येभ्यो जाताश्चिरपरिगता एव खलु ते**
**समं यैः संवृद्धाः स्मृतिविषयतां तेऽपि गमिताः ।**
**इदानीमेते स्म प्रतिदिवसमासन्नपतना-**
**द्गताः स्तुल्यावस्थां सिकतिलनदीतीरतरुभिः ॥ ३७ ॥**

वयमिति ॥ वयं येभ्यः पित्रादिभ्यो जातास्ते चिरं चिरकालेन परिगता नष्टाः । मृता एवेत्यर्थः । खलु निश्चयेन । यैः भ्रात्रादिभिः समं सह संवृद्धा वृद्धिं प्राप्तास्तेऽपि स्मृतिविषयतां स्मृतिगोचरतां गमिताः प्रापिताः । कालेनेति शेषः । इदानीमस्मिन्काल एते वयं प्रतिदिवसं दिवसंदिवसं प्रति आसन्नं समीपप्राप्तं यत् पतनं मृत्युः तस्माद्धेतोः सिकता वालुका विद्यन्ते यस्यां सा सिकतिला एतादृशी या नदी तस्यास्तीरसंबन्धितरुभिर्वृक्षैस्तुल्या समाना यात्रस्था तां गताः प्राप्ताः स्म । वालुकामयनदीतीरसंबन्धिनो वृक्षा यथा विनाशोन्मुखास्तथा वयमपि विनाशोन्मुखा जाता इत्यर्थः । शिखरिणी वृत्तम् ॥

पुत्रादिपरिवारसहवासस्यापि कालवशेनानियतत्वात्तद्विषयेऽप्यास्था न विधेयेति सूचयन्नाह—

**यत्रानेकः क्वचिदपि गृहे तत्र तिष्ठत्यथैको**
**यत्राप्येकस्तदनु बहवस्तत्र चान्ते न चैकः ।**
**इत्थं चेमौ रजनिदिवसौ दोलयन्वापि चाक्षौ**
**कालः काल्या सह बहुकलः क्रीडति प्राणिशारैः ॥ ३८ ॥**

यत्रानेक इति ॥ यत्र क्वचिदपि गृहे अनेकः पुत्रदारादिः कालवशेन तत्रैक एव तिष्ठति । अथानन्तरं यत्राप्येकस्तदनु बहवः भवन्तीति शेषः । तत्र

चान्ते एकोऽपि न । इत्थं अनेन प्रकारेण बहवः कलानिमेषादयो यस्मिन् । यद्वा बहून्विषयान्कलयति स्वेच्छानुरोधेन संपादयतीति बहुकलः । एतादृशः काल इमौ प्रसिद्धौ रजनी रात्रिः दिवसो दिनं च तावेव अक्षौ पाशकौ। "अक्षास्तु देवनाः पाशकाश्च ते" इत्यमरः । दोलयन्प्रक्षिपन् सन् काल्या स्वस्त्रिया मारकशक्त्या सह प्राणिन एव शाराः काष्ठादिरचितद्यूतोपकरणविशेषाः (सोंगटी इति ख्याताः) "शारः स्याच्छबले वाच्यलिङ्गः पुंसि समीरणे । अक्षोपकरणे" इति मेदिनी । तैः क्रीडति क्रीडां करोति । मन्दाक्रान्ता वृत्तम् । "मदक्रान्ता जलधिषडगैर्भौं नतौ ताद्गुरू चेत्" इति तल्लक्षणात् ॥

अत्यल्पायुषि अस्मिन्लोके अवश्यकर्तव्यकर्मणां बहुत्वेन कर्तुमशक्यत्वात्किं कर्तव्यमिति संदिहानो विचारं कुर्वन् तपस एवात्यन्तसुखहेतुत्वमिति स्वयमेव निर्णीय तस्यैवावश्यकर्तव्यतामभिप्रेत्याह तपस्यन्त इत्यादिश्लोकचतुष्टयेन—

**तपस्यन्तः सन्तः किमधिनिवसामः सुरनदीं**
**गुणोदारान्दारानुत परिचयामः सविनयम् ।**
**पिबामः शास्त्रौघानुत विविधकाव्यामृतरसा-**
**न्न विद्मः किं कुर्मः कतिपयनिमेषायुषि जने ॥ ३९ ॥**

तपस्यन्त इति ॥ वयं कतिपया निमेषा आयुर्यस्य तस्मिन् एतादृशे अस्मिन् जने लोके किं कुर्म इति न विद्मः । इति किम् । तपस्यन्तस्तपश्चर्यां कुर्वन्तः सन्तः सुरनदीं भागीरथीमधि । तत्तीर इति यावत् । निवसामो वासं कुर्मः । किम् । उताथवा गुणैरुदारान्प्रौढान् दारान्स्त्रियः सविनयं नम्रतापूर्वकं परिचयाम आश्रयामः । गृहे स्थित्वा गृहस्थाश्रमधर्ममेवाचराम इत्यर्थः । अथवा शास्त्रौघान् वेदान्तादिशास्त्रसमूहान् पिबाम । सेवामह इति यावत् । उत विविधानि काव्यानि तान्येवामृतरसास्तान्वा पिबाम इति । शिखरिणी वृत्तम् ॥

**अहौ वा हारे वा बलवति रिपौ वा सुहृदि वा**
**मणौ वा लोष्ठे वा कुसुमशयने वा दृषदि वा ।**
**तृणे वा स्त्रैणे वा मम समदृशो यान्तु दिवसाः**
**सदा पुण्येऽरण्ये शिवशिवशिवेति प्रजपतः ॥ ४० ॥**

अहाविति ॥ अहौ सर्पे वा हारे पुष्पादिस्रजि वा, बलवति बलिष्ठे रिपौ शत्रौ वा सुहृदि मित्रे वा, मणौ हीरकादौ वा लोष्ठे मृत्खण्डे वा, कुसुमशयने पुष्पपर्यङ्के वा, दृषदि पाषाणे वा, तृणे वा स्त्रैणे स्त्रीसमूहे वा

समदृशः समानदृष्टेः सदा पुण्ये पुण्यकारकेऽरण्ये वने शिवशिवशिवेति प्रजपतो जपं कुर्वतो मम दिवसा यान्तु गच्छन्तु । शिखरिणी वृत्तम् ॥

**गङ्गातीरे हिमगिरिशिलाबद्धपद्मासनस्य**
**ब्रह्मध्यानाभ्यसनविधिना योगनिद्रां गतस्य ।**
**किं तैर्भाव्यं मम सुदिवसैर्यत्र ते निर्विशङ्काः**
**कण्डूयन्ते जरठहरिणाः शृङ्गमङ्गे मदीये ॥ ४१ ॥**

गङ्गातीर इति ॥ गङ्गातीरे भागीरथीतीरे-हिमगिरेः शिलायां बद्धं पद्मासनं येन तस्य ब्रह्मध्यानस्याभ्यसनमभ्यासस्तस्य विधिर्विधानं तेन योगनिद्रां समाधिं गतस्य प्राप्तस्य मम तैः सुदिवसैः भाव्यं किं ते सुदिवसा भविष्यन्ति किम् । यत्र येषु दिवसेषु ते जरठहरिणा वृद्धमृगा निर्विशङ्का भयरहिताः सन्तो मदीयेऽङ्गे शृङ्गं कण्डूयन्ते घर्षणसुखं कुर्वन्ति । यस्यां मृगैः क्रियमाणं कण्डूयनमपि न ज्ञायते तादृशी समाधिर्मम कदा भविष्यतीत्यर्थः । मन्दाक्रान्ता वृत्तम् ॥

**स्फुरत्स्फारज्योत्स्नाधवलिततले क्वापि पुलिने**
**सुखासीनाः शान्तध्वनिषु रजनीषु द्युसरितः ।**
**भवाभोगोद्विग्नाः शिवशिवशिवेत्यार्तवचसः**
**कदा स्यामानन्दोद्गमबहुलबाष्पाकुलदृशः ॥ ४२ ॥**

स्फुरदिति ॥ शान्तो ध्वनिर्यासु एवंविधासु रजनीषु रात्रिषु स्फुरन्ती देदीप्यमाना स्फारा वृद्धिं प्राप्ता या ज्योत्स्ना चन्द्रिका तया धवलितं शुभ्रीभूतं तलं यस्य तस्मिन् । "जले" इति पाठे धवलितं जलं यस्मिन्नित्यर्थः । एवंविधे द्युसरितो भागीरथ्याः पुलिने तटे सुखेनासीनाः स्थितास्तथा भवस्य संसारस्य आभोगोऽतिशयेन सेवनं तेनोद्विग्नाः खिन्नाः अतएव शिवशिवशिवेति आर्तं दुःखकारकं वचो येषां ते तथाविधाः आनन्दस्योद्गमः प्रादुर्भावस्तेन बहुलानि यानि बाष्पाणि नेत्राश्रूणि तैराकुले दृशौ नेत्रे येषां ते एतादृशा वयं कदा स्याम भवाम । "आर्तवचसां" इति तृतीयान्तपाठे वचसा करणभूतेनेत्यर्थः । "कदा स्यामो हर्षोद्गमबहुलबाष्पप्लुतदृशः" इत्यपि क्वचित्पाठः । शिखरिणी वृत्तम् ॥

आशापरित्यागस्य दुस्त्यजत्वं नदीरूपकेण वर्णयन् तत्त्यागस्यात्यन्तं सुखहेतुत्वमाह—

**आशानाम नदी मनोरथजला तृष्णातरङ्गाकुला**
**रागग्राहवती वितर्कविहगा धैर्यद्रुमध्वंसिनी ।**

मोहावर्तसुदुस्तरातिगहना प्रोत्तुङ्गचिन्तातटी
तस्याः पारगता विशुद्धमनसो नन्दन्ति योगीश्वराः ॥ ४३ ॥

आशेति ॥ मनोरथोऽभिलाष एव जलं यस्यां सा, तथा तृष्णास्तर्षाः । पिपासा इति यावत् । "तृष्णा स्यात्तर्षलिप्सयोः" इति मेदिनी । तरङ्गास्तैराकुला व्याप्ता । तथा । रागा अनुरागा एव ग्राहा मकरादयो विद्यन्ते यस्यां सा, तथा वितर्का एव विहगाः पक्षिणो यस्यां सा, तथा धैर्यरूपो द्रुमो वृक्षस्तस्य ध्वंसिनी नाशिनी, तथा मोहा एवावर्ता जलभ्रमास्तैः सुदुस्तरा तर्तुमशक्या, तथा अतिगहना अत्यन्तं गम्भीरा, प्रकर्षेणोत्तुङ्गोन्नता या चिन्ता सैव तटं यस्याः सा एवंविधा आशानाम नदी अस्ति तस्याः पारं गताः, तथा विशुद्धं मनो येषां ते तथाविधा योगीश्वरा नन्दन्ति । हर्षं प्राप्नुवन्तीत्यर्थः । आशात्यागिनः पुरुषा अत्यन्तसुखानुभववन्तो भवन्तीति भावः । शार्दूलविक्रीडितं वृत्तम् ॥

मनोनियमकर्तुः पुरुषस्य दौर्लभ्यं दर्शयन्नाह—

आसंसारं त्रिभुवनमिदं चिन्वतां तात तादृ-
ङ्नैवास्माकं नयनपदवीं श्रोत्रवर्त्मागतो वा ।
योऽयं धत्ते विषयकरिणीगाढरूढाभिमान-
क्षीबस्यान्तःकरणकरिणः संयमालानलीलाम् ॥ ४४ ॥

आसंसारमिति ॥ हे तात, तादृक् तादृशः स पुरुषः आसंसारं संसारं यावत् इदं त्रिभुवनं चिन्वतां मृगयतामस्माकं नयनपदवीं नेत्रमार्गं वा अथवा श्रोत्रवर्त्म कर्णमार्गं नैवागतोऽस्तीति शेषः । स कः । योऽयं पुरुषः । विषय एव करिणी हस्तिनी तस्यां गाढो दृढो रूढो योऽभिमानस्तेन क्षीबस्य मत्तस्यान्तःकरणमेव करी हस्ती तस्य संयम इन्द्रियनिग्रह एवालानं गजबन्धनं तस्य लीलां धत्ते धारयति । मन्दाक्रान्ता वृत्तम् ॥

शिवाराधनापूर्वकं गङ्गातीरनिवासादिकं सर्वं सोढव्यं न याचनाविशिष्टं जीवनमिति सूचयन्नाह—

महादेवो देवः सरिदपि च सैवामरसरि-
द्गुहा एवागारं वसनमपि ता एव हरितः ।
सुहृद्वा कालोऽयं व्रतमिदमदैन्यव्रतमिदं
कियद्वा वक्ष्यामो वटविटप एवास्तु दयिता ॥ ४५ ॥

महादेव इति । देव एको महादेव एव, सरिदपि सा प्रसिद्धा अमरसरिदेव गङ्गैव । स्नानाद्यर्थमित्यर्थः । अगारं गृहं गुहा एव कन्दर्य एव, वसनं वस्त्रमपि ताः प्रसिद्धा हरितो दिश एव । वस्त्रराहित्येन निर्वाह इत्यर्थः । सुहृन्मित्रं अयं प्रसिद्धः कालो वा काल एव, दयिता भार्याऽपि वटविटपो वटवृक्षशाखा सैवास्तु । इदं सर्वं व्रतं नियमो न विद्यते दैन्यं याचनारूपं यस्मिन्नेतादृशं व्रतं भवति । याचनारहितं व्रतमित्यर्थः । इदं कियद्वा वक्ष्यामोऽपि तु सर्वमुक्तमेवेत्यर्थः । शिखरिणी वृत्तम् ॥

धनाढ्यादिसेवनापेक्षया वने स्थित्वा भगवदाराधनमेव वरमिति बोधयन्नाह—

**ये वर्तन्ते धनपतिपुरः प्रार्थनादुःखभाजो**
**ये चाऽल्पत्वं दधति विषयाक्षेपपर्यस्तबुद्धेः ।**
**तेषामन्तःस्फुरितहसितं वासराणां स्मरेयं**
**ध्यानच्छेदे शिखरिकुहरग्रावशय्यानिषण्णः ॥ ४६ ॥**

ये वर्तन्त इति ॥ धनपतेर्धनाढ्यस्य पुरोऽग्रभागे प्रार्थना याचना तस्या यद्दुःखं तद्भजतीति भाक् तस्य मम ये वासरा दिवसा वर्तन्ते स्मेति शेषः । एवमुत्तरत्रापि । ये च विषयैः कृत्वा य आक्षेपो भर्त्सनं तेन पर्यस्ता विपरीता बुद्धिर्यस्य ममाल्पत्वं दधति स्म । तेषां वासराणाम् । तान्दिवसानित्यर्थः । अहं ध्यानस्य छेदे विच्छेदे । समाधेरुत्थाने सतीत्यर्थः । अन्तरभ्यन्तरे स्फुरितं स्फुरद्रूपं हसितं यस्मिन्कर्मणि यथा भवति तथा स्मरेयं स्मरामि । कथमेते वासरा अतिसुखदा अतीता वासरास्त्वतिदुःखदा इत्याश्चर्यपूर्वकं स्मरामीति भावः । कीदृशोऽहम् । शिखरिणः पर्वतस्य कुहरं गुहा । "कुहरं गह्वरे छिद्रे" इति मेदिनी । तस्मिन् ये ग्रावाणः पाषाणास्त एव शय्या तस्यां निषण्ण उपविष्टः । मन्दाक्रान्ता वृत्तम् ॥

विद्यादिसंपादनमकुर्वतः परदत्तान्नेन जीवनं संपादयतो ममायुर्व्यर्थं गतमिति पश्चात्तापपूर्वकं वदन् विद्यादिसंपादनस्यावश्यकतां बोधयन्नाह—

**विद्या नाधिगता कलङ्करहिता वित्तं च नोपार्जितं**
**शुश्रूषाऽपि समाहितेन मनसा पित्रोर्न संपादिता ।**
**आलोलायतलोचना युवतयः स्वप्नेऽपि नालिङ्गिताः**
**कालोऽयं परपिण्डलोलुपतया काकैरिव प्रेरितः ॥ ४७ ॥**

विद्येति ॥ कलङ्करहिता दोषरहिता विद्या शास्त्रादिरूपा । परमार्थसाधिकेति यावत् । एवंविधा नाधिगता न प्राप्ता । न संपादितेति यावत् । अस्मा-

भिरिति शेषः । एवं सर्वत्र । च पुनः वित्तं धनमपि नोपार्जितं न संपादितम् , तथा समाहितेन स्वस्थेन मनसान्तःकरणेन पित्रोर्माता च पिता च पितरौ तयोः शुश्रूषा सेवापि न संपादिता न कृता, तथा आलोले चञ्चले आयते विस्तीर्णे लोचने नेत्रे यासां ता युवतयस्तरुणस्त्रियः स्वप्नेऽपि नालिङ्गिताः, सांसारिकं सुखं किमपि नानुभूतमित्यर्थः । किंतु अयं कालः काकैरिवास्माभिः परपिण्डे अन्यदत्ताहारे लोलुपता लुब्धता तया प्रेरितः प्रक्षिप्तः । नीत इति यावत् । परपिण्डोपजीवनेनातिवाहित इत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥

संसारस्यातिदुःखदत्वं दृष्ट्वा तत्त्यागपूर्वकं वने स्थित्वा सुखदत्वाच्छिवचरणाराधनमेव कर्तव्यमित्याह—

**वितीर्णे सर्वस्वे तरुणकरुणापूर्णहृदयाः**
**स्मरन्तः संसारे विगुणपरिणामावधिगतिम् ।**
**वयं पुण्येऽरण्ये परिणतशरच्चन्द्रकिरणै-**
**स्त्रियामां नेष्यामो हरचरणचित्तैकशरणाः ॥ ४८ ॥**

वितीर्ण इति ॥ वयं सर्वस्वे सर्वधने वितीर्णे दत्ते सति । सर्वस्वदाने कृते सतीत्यर्थः । हरस्य शिवस्य चरणावेव चित्तस्यैकं शरणं रक्षितृ येषां ते अथवा हरचरणयोः संलग्नं यच्चित्तं तदेवैकशरणं येषां ते अथवा हरचरणयोश्चित्तं येषां ते शिवभक्तास्त एवैकं शरणं येषां ते तथाविधाः सन्तः पुण्ये पुण्यकारकेऽरण्ये परिणताः परिणामं प्राप्ता ये शरदि चन्द्रकिरणास्तैः सह त्रियामां रात्रिं नेष्यामः । चन्द्रकिरणैः पुण्ये सुखदे अरण्ये इति वा संवन्धः कर्तव्यः । चन्द्रकिरणे इति सप्तम्यन्तपाठेऽरण्यविशेषणम् । कीदृशा वयम् । तरुणा या करुणा कृपा तया पूर्णं परिपूर्णं हृदयं येषां ते । पुनः कीदृशाः । अस्मिन्संसारे विगुणो विपरीतो यः परिणामः स्वरूपान्यथाभावः स एवावधिः सीमा यस्या एतादृशीं गतिमवस्थां स्मरन्तश्चिन्तयन्तः । संसारस्य सदोषत्वं सान्तत्वं च चिन्तयन्त इत्यर्थः । शिखरिणी वृत्तम् ॥

मनःसंतोषस्यात्यन्तसुखहेतुत्वमिति राजानं प्रत्याह—

**वयमिह परितुष्टा वल्कलैस्त्वं च लक्ष्म्या**
**सम इह परितोषो निर्विशेषो विशेषः ।**
**स तु भवति दरिद्रो यस्य तृष्णा विशाला**
**मनसि च परितुष्टे कोऽर्थवान्को दरिद्रः ॥ ४९ ॥**

वयमिति ॥ हे राजन् , इह संसारे वयं वल्कलैः परितुष्टाः स्मः । त्वं च लक्ष्म्या परितुष्टोऽसि । उभयोः परितोषः संतोषः समोऽस्ति । इह उभयोः संतोषयोर्मध्य एकस्य निर्विशेषः । भावप्रधानो निर्देशः । यद्विशेषराहित्यं स एव विशेषः । तदेवोपपादयति—यस्य तृष्णा विशाला विस्तीर्णा स तु दरिद्रो भवति । मनसि परितुष्टे सति अर्थवान्धनवान्कः दरिद्रश्च कः । न कोपीत्यर्थः । मालिनी वृत्तम् ॥

यत्स्वच्छन्दवर्तनादिकं तन्महतस्तपसः फलमित्याह—

**यदेतत्स्वच्छन्दं विहरणमकार्पण्यमशनं**
**सहार्यैः संवासः श्रुतमुपशमैकव्रतफलम् ।**
**मनो मन्दस्पन्दं बहिरपि चिरस्यापि विमृश-**
**न्न जाने कस्यैषा परिणतिरुदारस्य तपसः ॥ ५० ॥**

यदेतदिति ॥ एषा उदारस्य महतः कस्य तपसः परिणतिः परिणाम एतद् चिरस्य चिरकालं विमृशन्विचारयन्नप्यहं न जाने । एषा का । स्वच्छन्दं यथा स्यात्तथा विहरणं विहारः । वर्तनमिति यवत् । "स्वाच्छन्द्यविहरणम्" इति पाठ अर्शआद्यच् । स्वाच्छन्द्यवत् । स्वच्छन्दयुक्तमिति यावत् । अकार्पण्यं दैन्यरहितमशनं भोजनम् , आर्यैः सद्भिः सह संवासः संगतिः, उपशमः शान्तिरेवैकं मुख्यं व्रतफलं नियमसिद्धिर्यस्मिन्नेवंविधं श्रुतं शास्त्रश्रवणम्, बहिरपि बहिर्विषयेष्वपि मन्दः स्पन्दश्चलनं यस्य एवंविधं मन इति यत् सैषा । शिखरिणी वृत्तम् ॥

निःसङ्गत्वेन दैन्यं त्यजतां कर्मनिर्मूलनं कुर्वतां पुरुषाणां धन्यत्वमाह—

**पाणिः पात्रं पवित्रं भ्रमणपरिगतं भैक्षमक्षय्यमन्नं**
**विस्तीर्णं वस्त्रमाशादशकमपमलं तल्पमल्पस्वमुर्वी ।**
**येषां निःसङ्गताङ्गीकरणपरिणतिः स्वात्मसंतोषिणस्ते**
**धन्याः संन्यस्तदैन्यव्यतिकरनिकराः कर्म निर्मूलयन्ति ॥५१॥**

पाणिरिति ॥ पाणिर्हस्त एव पवित्रं पात्रं भाजनं नान्यत् , भ्रमणेन परिगतं प्राप्तं भैक्षं भिक्षासमूहः अक्षय्यमव्ययमन्नम् , आशानां दिशानां दशकं विस्तीर्णं वस्त्रम्, उर्वी पृथ्वी अपमलं निर्मलं । "आशासु दशकममलम्" इत्यपि पाठः । अस्वल्पं महत् तल्पं शय्या । तदुक्तं भागवते द्वितीयस्कन्धे—"सत्यां क्षितौ किं कशिपोः प्रयासैर्बाहौ स्वसिद्धे ह्युपबर्हणैः किम् । सत्यञ्जलौ किं पुरुधान्नपात्र्या दिग्वल्कलादौ सति किं दुकूलैः" इति । एवं

येषां निःसङ्गताया अङ्गीकरणं स्वीकारस्तस्य परिणतिः परिणामः, "निःसङ्गतान्तःकरण" इति पाठे निःसङ्गतायामन्तःकरणस्य परिणतिरित्यर्थः। अतएव स्वात्मनि संतोषिणः सन्तोषं प्राप्नुवन्तः, तथा संन्यस्ता दैन्यरूपा ये व्यतिकरा व्यसनानि। दुःखानीति यावत्। तेषां निकरः समूहो यैस्ते, "अथ व्यतिकरः पुंसि व्यसनव्यतिषङ्गयोः" इति मेदिनी। "व्यसनं विपदि भ्रंशे" इत्यमरश्च। एवंविधाः सन्तो ये पुरुषाः कर्म निर्मूलयन्ति निर्मूलं कुर्वन्ति ते धन्याः पुण्यवन्तः सन्तीति शेषः। स्रग्धरा वृत्तम्॥

इतरराजाद्याराधनापेक्षया तपस एवेहाऽपरत्र श्रेयस्करत्वमाह—

दुराराध्यः स्वामी तुरगचलचित्ताः क्षितिभुजो
वयं तु स्थूलेच्छा महति च पदे बद्धमनसः।
जरा देहं मृत्युर्हरति सकलं जीवितमिदं
सखे नान्यच्छ्रेयो जगति विदुषोऽन्यत्र तपसः॥ ५२॥

दुराराध्य इति॥ स्वामी चक्रवर्ती राजा दुःखेनाप्याराधयितुं शक्यः क्षितिभुज इतरे माण्डलिका राजानः तुरगवदश्ववच्चलं चञ्चलं चित्तं येषां ते। अस्थिरचित्ता इति यावत्। एवंविधाः सन्ति। वयं तु स्थूलेच्छा महाशयाः। उदारान्तःकरणा इति यावत्। च पुनः महति पदेति सार्वभौमादिस्थाने बद्धं मनो येषां ते एवंविधाः स्मः। जरा देहं हरति नाशयति, मृत्युश्चेदं सकलं जीवितमायुर्हरति। तस्मात् हे सखे, इह जगति। तपसोऽन्यत्र तपोविना विदुषः पण्डितस्याऽन्यच्छ्रेयः कल्याणं नास्ति। शिखरिणी वृत्तम्॥

क्षणभङ्गुरविषयसुखादित्यागपूर्वकं योगाभ्यासः कर्तव्य इत्याह—

भोगा मेघवितानमध्यविलसत्सौदामनीचञ्चला
आयुर्वायुविघट्टिताभ्रपटलीलीनाम्बुवद्भङ्गुरम्।
लोला यौवनलालसा तनुभृतामित्याकलय्य द्रुतं
योगे धैर्यसमाधिसिद्धिसुलभे बुद्धिं विदध्वं बुधाः॥ ५३॥

भोगा इति॥ भोगा विषयसुखानि मेघानां वितानो विस्तारस्तस्य मध्ये विलसन्ती या सौदामनी विद्युत् तद्वच्चञ्चलाः। विद्युद्वदतिशीघ्रविनाशिन इत्यर्थः। सन्तीति शेषः। एवमुत्तरत्रापि शेषपूरणं कर्तव्यम्। तथा आयुर्जीवितं वायुना विघट्टिता चालिता याभ्रपटली मेघसमूहस्तस्मिंल्लीनं यदम्बु जलं तद्वद्भङ्गुरं नाशशीलमस्ति, तथा तनुभृतां देहिनां यौवने लालसा औत्सुक्यम्।

"लालसौत्सुक्यतृष्णातिरेकयाच्ञासु च द्वयोः" इति मेदिनी । लोला चञ्चलास्ति । यौवनस्याचिरस्थायित्वेन तदौत्सुक्यस्यापि तथात्वमित्यर्थः । इदं सर्वविषयाणामुपलक्षणम् । सर्वेऽपि विषयाश्चञ्चला इत्यर्थः । तदुक्तं भागवते सप्तमस्कन्धे । "रायः कलत्रं पशवः सुतादयो गृहा महीकुञ्जरकोशभूतयः । सर्वेऽर्थकामाः क्षणभङ्गुरायुषः कुर्वन्ति मर्त्यस्य कियत्प्रियं चलाः" इति । तथा एतच्छ्लोकटीकायां तदुक्तमितिहासेषु । "धनं हि पुरुषो लोके पुरुषं धनमेव वा । अवश्यमेकं त्यजति तस्मात्किं धनतृष्णया" इति च । इति पूर्वोक्तं सर्वमाकलय्य ज्ञात्वा हे बुधाः, यूयं धैर्येण समाधिना चित्तैकाग्र्येण च या सिद्धिस्तया सुलभे सुसाध्ये । "ध्येयसमाधौ" इति पाठे ध्येयवस्तुविषये यः समाधिस्तेनेत्यर्थः । एवंविधे योगे द्रुतं शीघ्रं बुद्धिं विदध्वं कुरुध्वम् । शार्दूलविक्रीडितं वृत्तम् ॥

भिक्षया जीवनं योग्यं न पुनः स्वीयेषु दैन्येनेत्याह—

**पुण्ये ग्रामे वने वा महति सितपटच्छन्नपालीं कपाली-**
**मादाय न्यायगर्भद्विजहुतहुतभुग्धूमधूम्रोपकण्ठम् ।**
**द्वारं द्वारं प्रवृत्तो वरमुदरदरीपूरणाय क्षुधार्तो**
**मानी प्राणी स धन्यो न पुनरनुदिनं तुल्यकुल्येषु दीनः ॥५४॥**

पुण्य इति ॥ मानी अभिमानी प्राणी जन्तुः, "प्राणी तु चेतनो जन्मी जन्तुः" इत्यमरः । क्षुधया आर्तः पीडितः सन् पुण्ये पुण्यकारके ग्रामे वाथवा महति वनेऽरण्ये सितपटः शुभ्रवस्त्रं तेन छन्ना आच्छादिता पाली आसमन्तात्प्रदेशो यस्यास्ताम्, "पालिः कर्णलतायां स्यात्प्रदेशे पङ्क्तिचिह्नयोः" इत्यजयः । "कृदिकारात्" इति ङीष् । अल्पं कपालं कपाली घटशकलं ताम् । "कपालोऽस्त्री शिरोऽस्थि स्याद्घटादेः शकले व्रजे" इति मेदिनी । "स्त्री स्यात्काचिन्मृणाल्यादिर्विवक्षापचये यदि" इत्यमरात्स्त्रीत्वपि अपचयेऽल्पत्वे विवक्षा चेदित्यर्थः । गौरादित्वात् ङीष् । आदाय गृहीत्वा उदरमेव दरी गुहा तस्याः पूरणाय पूरणं कर्तुं न्यायो नीतिर्गर्भे येषामेवंविधा ये द्विजा ब्राह्मणास्तैर्हुतो यो हुतभुगग्निस्तस्य यो धूमस्तेन धूम्रं धूम्रवर्णमुपकण्ठमन्तिकभागो यस्यैवंविधं द्वारंद्वारं प्रवृत्तो भवेदेतद्वरं योग्यं, परंतु पुनः अनुदिनं दिवसंदिवसं प्रति तुल्याः समाना ये कुल्याः कुलोद्भवा मान्या वा तेषु दीनो न भवेत् । "कुल्या पयःप्रणाल्याम्" इत्युपक्रम्य । "कुलोद्भवे कुलहिते त्रिषु मान्ये पुनः पुमान्" इति मेदिनी । स धन्योऽस्ति । स्रग्धरा वृत्तम् ॥

योगिनः स्थितिमाह—

चाण्डालः किमयं द्विजातिरथवा शूद्रोऽथ किं तापसः
किंवा तत्त्वविवेकपेशलमतिर्योगीश्वरः कोऽपि किम् ।
इत्युत्पन्नविकल्पजल्पमुखरैः संभाष्यमाणा जनै-
र्न क्रुद्धाः पथि नैव तुष्टमनसो यान्ति स्वयं योगिनः ॥ ५५ ॥

चाण्डाल इति ॥ अयं चाण्डालः किम्, अथवा द्विजातिर्ब्राह्मणः किम्, अथवा शूद्रः किम्, वा अथवा तापसस्तपस्वी किम्, अथवा तत्त्वविवेकेन तत्त्वविवेचनेन पेशला निपुणा मतिर्बुद्धिर्यस्य स एवंविधः कोऽपि योगीश्वरः किम्, इति पूर्वोक्तप्रकारेण उत्पन्ना ये विकल्पजल्पा विकल्पयुक्तभाषणानि तैर्मुखरा वाचालास्तैर्जनैः संभाष्यमाणा अपि योगिनः क्रुद्धा न भवन्ति तथा तुष्टमनसः संतुष्टान्तःकरणा एवंविधा अपि न भवन्ति किंतु स्वयं स्वेच्छया पथि मार्गे यान्ति गच्छन्ति । दुर्जनैर्भर्त्सिता अपि क्रोधहर्षरहिता योगिनः स्वाच्छन्द्येन वर्तन्त इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥

अत्यन्तपापहेतुभूतविषयसेवनं परित्यज्य सुखहेतुभूतं वनवासं कुर्वतः पुरुषस्य धन्यतामाह—

सखे धन्याः केचित्त्रुटितभवबन्धव्यतिकरा
वनान्ते चित्तान्तर्विषमविषयाशीविषगताः ।
शरच्चन्द्रज्योत्स्नाधवलगगनाभोगसुभगां
नयन्ते ये रात्रिं सुकृतचयचित्तैकशरणाः ॥ ५६ ॥

सखे इति ॥ हे सखे हे मित्र, ये केचित्पुरुषाः शरदि शरत्काले यश्चन्द्रस्तस्य ज्योत्स्ना चन्द्रिका तया धवलः शुभ्रो यो गगनाभोग आकाशविस्तारस्तेन सुभगां मनोहरां रात्रिं नयन्ते ते धन्याः सन्तीति शेषः । किंभूताः । त्रुटितश्छिन्नो भवबन्धस्य संसारबन्धस्य व्यतिकरः संबन्धो येषां ते तथा वनान्ते वनमध्ये चित्तस्यान्तर्मध्ये ये विषमा विषयास्त एव आशीविषाः सर्पा गता येषां ते । वाहिताग्न्यादित्वाद्गतशब्दस्य परनिपातः । तथा सुकृतानां पुण्यानां चयः समूहस्तस्मिन्यच्चित्तं तदेव एकं शरणं येषां ते एवंविधाः । पुण्यसंपादनैकचित्ता इत्यर्थः । शिखरिणी वृत्तम् ॥

संसारदुःखेन खिन्नः पुरुषः स्वचित्तं प्रार्थयते—

एतस्माद्विरमेन्द्रियार्थगहनादायासदादाशु च
श्रेयोमार्गमशेषदुःखशमनव्यापारदक्षं क्षणम् ।

शान्तं भावमुपेहि संत्यज निजां कल्लोललोलां मतिं
भूयो मा भज भङ्गुरां भवरतिं चेतः प्रसीदाधुना ॥ ५७ ॥

एतस्मादिति ॥ हे चेतः, एतस्मादायासं ददातीत्यायासदं तस्मात्, इन्द्रियाणामर्थो विषयः स एव गहनमरण्यं तस्माद्विरम निवृत्तो भव । "आयासकष्टाश्रयात्" इति पाठे आयासः श्रमः कष्टं दुःखं च तयोराश्रयादित्यर्थः । तथा आशु शीघ्रं श्रेयसः कल्याणस्य मार्गं वर्त्मभूतम्, तथा अशेषाणि यानि दुःखानि तेषां शमने यो व्यापारस्तस्मिन् दक्षं समर्थमेवंविधं शान्तं भावं स्थितिं क्षणं क्षणमात्रमुपेहि प्राप्नुहि । "स्वात्मीभावम्" इति पाठे स्वात्मीभावं स्वः स्वीयः आत्मीभावः स्वरूपस्थितिर्यस्मिन्नेवंविधं श्रेयोमार्गमुपैहीति संबन्धः । तथा कल्लोलवज्जलतरङ्गवल्लोलां चञ्चलां निजां स्वकीयां मतिं बुद्धिं संत्यज । भूयः पुनर्भङ्गुरां नाशशीलां भवे रतिं प्रेम मा भज । मा कुर्वित्यर्थः । किं तर्हि अधुनेदानीं प्रसीद प्रसन्नं भव । शार्दूलविक्रीडितं वृत्तम् ॥

निराबाधिका वने स्थितिरेव योग्येति मन्वानस्य कस्यचित्पुरुषस्योक्तिमाह—

पुण्यैर्मूलफलैः प्रिये प्रणयिनि प्रीतिं कुरुष्वाधुना
भूशय्या नववल्कलैरकरणैरुत्तिष्ठ यामो वनम् ।
क्षुद्राणामविवेकमूढमनसां यत्रेश्वराणां सदा
चित्तव्याध्यविवेकविह्वलगिरां नामापि न श्रूयते ॥ ५८ ॥

पुण्यैरिति ॥ प्रणयिनि प्रणयवति प्रिये इति स्त्रियाश्चित्तवृत्तेर्वा संबोधनम् । पुण्यैः शोभनैः । "पुण्यं शोभने त्रिषु" इति मेदिनी । मूलानि च फलानि च तैः, तथा न क्रियन्त इत्यकरणैः । अकृत्रिमैरित्यर्थः । भूशय्या च नववल्कलानि च तैः कृत्वा प्रीतिं मनःसंतोषं कुरुष्व । "प्रीतिर्योगान्तरे प्रेम्णि स्मरपत्नीमुदोः स्त्रियाम्" इति मेदिनी । अनायासेनैव तत्प्राप्तिस्थानमाह—उत्तिष्ठेति । अधुना उत्तिष्ठ । वयं तत् वनमेव यामो गच्छामः । तत्किम् । यत्र यस्मिन्वने क्षुद्राणां तुच्छानामीश्वराणां धनिकानां नामापि न श्रूयते । कीदृशानामीश्वराणाम् । अविवेकेन मूढं मोहितं मनो येषां तेषाम् । तथा सदा सर्वकाले चित्तव्याधिर्मनोव्याधिरविवेकश्च ताभ्यां विह्वला व्याप्ता गीर्वाणी येषां तेषाम् । "वित्तध्यानविवेकविह्वलधियाम्" इति पाठे वित्तस्य धनस्य ध्यानं चिन्ता विवेको विचारस्ताभ्यां तत्प्राप्त्युपायविह्वला व्याकुला

धीर्बुद्धिर्येषां तेषामित्यर्थः । "चित्तव्याधिविकारविह्वलगिरम्" इति पाठे चित्तव्याधिर्मनोव्याधिस्तद्रूपो यो विकारस्तेनेत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥

सांसारिकविषयसुखभोगेच्छां परित्यज्य शिवभक्त्यादिकं कुर्विति स्वचेतः प्रतिबोधयन्नाह—

**मोहं मार्जय तामुपार्जय रतिं चन्द्रार्धचूडामणौ**
**चेतः स्वर्गतरङ्गिणीतटभुवामासंगमंगीकुरु ।**
**को वा वीचिषु बुद्बुदेषु च तडिल्लेखासु च स्त्रीषु च**
**ज्वालाग्रेषु च पन्नगेषु च सरिद्वेगेषु च प्रत्ययः ॥ ५९ ॥**

मोहमिति ॥ हे चेतः, त्वं मोहं मार्जय । तथा चन्द्रस्यार्धः शकलः। कलेति यावत् । स एव चूडामणिः शिरोभूषणं यस्य तस्मिन् शिवे तां रतिं प्रीतिमुपार्जय संपदय । कुर्वित्यर्थः । तथा स्वर्गतरङ्गिणी भागीरथी तस्यास्तटसंबन्धि भुवस्तासामासङ्गं सङ्गतिमङ्गीकुरु स्वीकुरु । गङ्गातीरनिवासं कुर्वित्यर्थः । किंचित्कालं विषयोपभोगादिकं कृत्वा चरमे वयसि तथा करिष्यामीति मनुष्ये चेदतिचपले तस्मिन्नायुषि विश्वासं मा कुर्वित्याशयेनाह—को वेति । वीचिषु जलतरङ्गेषु तथा बुद्बुदेषु जलविकारेषु तथा तडिल्लेखासु विद्युल्लतासु तथा श्रीषु संपत्सु । "स्त्रीषु" इत्यपि क्वचित्पाठः । ज्वालाग्रेषु वह्निशिखाग्रेषु, तथा पन्नगेषु सर्पेषु, तथा सरिद्वेगेषु नदीवेगेषु को वा प्रत्ययो विश्वासः । न कोऽपीत्यर्थः । अयं भावः । तुरङ्गादयः पदार्था यथातिचपलास्तद्वदायुषोऽतिचपलत्वेन तस्मिन् विश्वासो न कार्य इति । अत्र दृष्टान्ततयोपन्यस्तैस्तरङ्गादिभिस्तत्सदृशातिचपलस्य दार्ष्टान्तिकस्यायुषो लाभो बोध्यः, शार्दूलविक्रीडितं वृत्तम् ॥

सति तथाविध ऐश्वर्ये संसारसुखाभिलाषं कुरु नोचेदीश्वरध्यानमेव कुर्विति स्वचित्तं प्रति बोधयन्नाह—

**अग्रे गीतं सरसकवयः पार्श्वतो दाक्षिणात्याः**
**पृष्ठे लीलावलयरणितं चामरग्राहिणीनाम् ।**
**यद्यस्त्येवं कुरु भवरसास्वादने लम्पटत्वं**
**नो चेच्चेतः प्रविश सहसा निर्विकल्पे समाधौ ॥ ६० ॥**

अग्रे इति ॥ हे चेतः, त्वं अग्रेऽग्रभागे गीतं गानम्, तथा पार्श्वतः पार्श्वभागे दाक्षिणात्याः दक्षिणदिग्भवाः सरसाः रसिकाः कवयः पृष्ठे पृष्ठभागे चामरं प्रकीर्णकं गृह्णन्ति तास्तासां स्त्रीणां लीलया वलयानां कङ्कणानां रणितं

शब्दः । यदि एवं पूर्वोक्तमस्ति तर्हि भवस्य संसारस्य रसस्तस्यास्वादने लम्पटस्त्वं लोलुपत्वं कुरु । नोचेत्पूर्वोक्तैश्वर्याभावे सहसा शीघ्रमेव निर्विकल्पे द्वैतभ्रमरहिते समाधौ प्रविश प्रवेशं कुरु । समाधिमेवाश्रयस्वेत्यर्थः । मन्दाक्रान्ता वृत्तम् ॥

नरके तरणे इच्छा चेत्त्वयादि सुखं हित्वा करुणादिसेवनमेवावश्यं कर्तव्यमिति सूचयन्नाह—

**विरमत बुधा योषित्संगात्सुखात्क्षणभङ्गुरा-**
**त्कुरुत करुणामैत्री प्रज्ञावधूजनसंगमम् ।**
**न खलु नरके हाराक्रान्तं घनस्तनमण्डलं**
**शरणमथवा श्रोणीबिम्बं रणन्मणिमेखलम् ॥ ६१ ॥**

विरमतेति ॥ हे बुधाः यूयं, क्षणभङ्गुरात्क्षणध्वंसिनो योषितां यः सङ्गस्तद्रूपात्सुखाद्विरमत विरक्ता भवत । स्त्रीसंगमे इच्छा चेत्तदर्हा स्त्रिय आह—करुणा सर्वभूतदया च मैत्री सर्वभूतेषु मित्रता च प्रज्ञा आत्मज्ञानं च ता एव वधूजनाः स्त्रीजनास्तासां संगमं संगतिं कुरुत । यतः हारेण मुक्ताहारेणाक्रान्तं व्याप्तमेवंविधं घनं निविडं स्तनमण्डलं कुचमण्डलमर्थात्स्त्रिया एव अथवा रणन्ती शब्दायमाना मणियुक्ता मेखला काञ्ची यस्मिन्नेवंविधं श्रोणीबिम्बं कटिमण्डलम् । "बिम्बं तु प्रतिबिम्बेऽपि मण्डलं पुंनपुंसकम्" इति मेदिनी ॥ नरके शरणं रक्षितृ न भवति खलु निश्चयेन ॥ हरिणी वृत्तम् ॥

निस्पृहा लक्ष्मीमप्यतितुच्छत्वेन गणयन्तीत्याह—

**मातर्लक्ष्मि भजस्व कंचिदपरं मत्काङ्क्षिणी मास्म भू-**
**र्भोगेभ्यः स्पृहयालवो न हि वयं का निस्पृहाणामसि ।**
**सद्यः स्यूतपलाशपत्रपुटिकापात्रे पवित्रीकृते**
**भिक्षासक्तुभिरेव संप्रति वयं वृत्तिं समीहामहे ॥ ६२ ॥**

मातरिति ॥ हे मातर्लक्ष्मि, त्वं अपरमन्यं कंचिद्भजस्व । मत्कांक्षिणी मदिच्छावती मास्मभूर्मा भव । हि यस्माद्वयं भोगेभ्यो भोगान् । "स्पृहेरीप्सितः" इति संप्रदानत्वम् । स्पृहयालवो वाञ्छावन्तो न । त्वं निस्पृहाणां कासि । अभिलषणीया न भवसीत्यर्थः । संप्रतीदानीं वयं सद्यस्तत्कालं पवित्रीकृते स्यूता कृतसीवना या पलाशपत्राणां पुटिका संपुटकः स एव पात्रं तस्मिन् भिक्षया प्राप्ता ये सक्तवस्तैरेव वृत्तिं जीविकां समीहामहे वाञ्छामहे । अतो नास्माकं तत्रोपयोग इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥

अवैराग्यदशायां परस्परमकृत्रिमसुहृत्त्वाद्यभिनिवेशेन आवयोरभेदबुद्धिरासीदिदानीं वैराग्यदशायां तादृशाभिनिवेशाभावेन भेदबुद्धिर्जातेत्यमुमर्थमुभयोः प्रश्नोत्तरमुखेनाह—

**यूयं वयं वयं यूयमित्यासीन्मतिरावयोः ।**
**किं जातमधुना मित्र यूयं यूयं वयं वयम् ॥ ६३ ॥**

यूयमिति ॥ हे मित्र, यूयं वयमेव वयं यूयमेवेति पूर्वमावयोर्मतिरासीत् । मित्रयोः परस्परं सुहृत्त्वाभिनिवेशेनाभेदबुद्धिरासीदित्यर्थः । अधुना किं जातम् । यूयं यूयमेव वयं वयमेवेति बुद्धिर्जाता । इदानीं सुहृत्त्वाभिनिवेशाभावेन परस्परं भेदबुद्धिर्जातेत्यर्थः । तस्मादवैराग्यदशायां सुहृत्त्वाद्यभिनिवेशे सत्यपि वैराग्यदशायां स नश्यतीति भावः । तदुक्तं भारते सनत्सुजातीये "पितामहोऽस्मि स्थविरः पिता पुत्रश्च भारत । ममैव यूयमात्मस्था न मे यूयं न वो वयम् ॥" अनुष्टुब् वृत्तम् ॥

स्वस्य वैराग्यस्थितिं परस्परं संवादमुखेन वर्णयति—

**बाले लीलामुकुलितममी मन्थरा दृष्टिपाताः**
**किं क्षिप्यन्ते विरम विरम व्यर्थ एष श्रमस्ते ।**
**संप्रत्यन्ये वयमुपरतं बाल्यमास्था वनान्ते**
**क्षीणो मोहस्तृणमिव जगज्जालमालोकयामः ॥ ६४ ॥**

बाले इति ॥ हे बाले, ते लीलया मुकुलितं कुड्मलितं यथा स्यात्तथा, अमी मन्थरा मन्दगामिनो दृष्टिपाता अस्मासु त्वया किं क्षिप्यन्ते । विरम, विरम, एष ते श्रमो व्यर्थ एवास्ति । कुतः संप्रतीदानीं वयमन्येऽभूम । अस्माकं बाल्यमुपरतं शान्तम् । गतमिति यावत् । अस्माकमास्था वनान्ते आसीत् । मोहः क्षीणो नष्टोऽभूत् । जगज्जालं तृणमिवालोकयामः पश्यामः । एवंविधावस्थायां तव कटाक्षक्षेपणं निरर्थकमिति भावः । मन्दाक्रान्ता वृत्तम् ॥

तामेव वैराग्यस्थितिं प्रकारान्तरेण वर्णयति—

**इयं बाला मां प्रत्यनवरतमिन्दीवरदल-**
**प्रभाचोरं चक्षुः क्षिपति किमभिप्रेतमनया ।**
**गतो मोहोऽस्माकं स्मरकुसुमबाणव्यतिकर-**
**ज्वरज्वाला शान्ता तदपि न वराकी विरमति ॥ ६५ ॥**

इयमिति ॥ इयं बाला । इन्दीवरस्य नीलकमलस्य पत्रं पर्णं तस्य प्रभां

कान्तिं चोरयतीति चोरं चक्षुर्मां प्रति क्षिपति प्रेरयति, अनया किमभिप्रेतं किं वांछयते । अस्माकं मोहो गतोऽस्ति । स्मरस्य कामस्य कुसुमबाणाः पुष्पशरास्तेषां व्यतिकरो मिश्रीभावः । संबन्ध इति यावत् । तेन यो ज्वरस्तस्य ज्वाला शिखा शान्ता आसीदिति शेषः । "स्मरशबरबाण" इति पाठे स्मर एव शबर इत्यर्थः । तदपि तथापि वराकी अतितुच्छा इयं न विरमति विरामं न प्राप्नोति । सति तादृशे दृढे वैराग्ये कामिन्याः कटाक्षपातादिकं सर्वं व्यर्थमिति भावः । शिखरिणी वृत्तम् ॥

स्वहितमिच्छता पुरुषेण अचिरस्थायित्वेन तुच्छत्वबुद्ध्या हर्म्यादिकं सर्वं विहाय वनमेवाश्रयणीयमिति साधुवृत्तान्तप्रदर्शनेनाह—

**रम्यं हर्म्यतलं न किं वसतये श्राव्यं न गेयादिकं**
**किंवा प्राणसमासमागमसुखं नैवाधिकं प्रीतये ।**
**किंतूद्भ्रान्तपतत्पतङ्गपवनव्यालोलदीपाङ्कर-**
**च्छायाचञ्चलमाकलय्य सकलं सन्तो वनान्तं गताः ॥ ६६ ॥**

रम्यमिति ॥ वसतये निवासाय हर्म्यतलं गृहतलं रम्यं मनोहरं न किम्, तथा गेयादिकं गानादिकं श्राव्यं श्रवणीयं न किम्, वाथवा प्राणसमा प्राणतुल्या प्रिया तस्याः समागमस्य सुखं प्रीतये अधिकं नैव किम् । किंतु उद्भ्रान्ता भ्रममाणाः पतन्तश्च पतङ्गाः शलभास्तत्संबन्धी यः पवनो वायुस्तेन व्यालोलाश्चञ्चला दीपाङ्कुरास्तेषां छाया कान्तिस्तद्वच्चञ्चलं सकलं पूर्वोक्तमाकलय्य ज्ञात्वा सन्तः साधवो वनान्तं वनमध्यं गताः स्मः । शार्दूलविक्रीडितं वृत्तम् ॥

अनायासेन जीवनसाधनेषु कन्दादिषु विद्यमानेषु केवलं जीवनेच्छया खलाराधनं सुतरां न कर्तव्यमित्याशयेनाह—

**किं कन्दाः कंदरेभ्यः प्रलयमुपगता निर्झरा वा गिरिभ्यः**
**प्रध्वस्ता वा तरुभ्यः सरसफलभृतो वल्कलिन्यश्च शाखाः ।**
**वीक्ष्यन्ते यन्मुखानि प्रसभमुपगतप्रश्रयाणां खलानां**
**दुःखोदात्ताल्पवित्तस्मयवशपवनानर्तितभ्रूलतानि ॥ ६७ ॥**

किं कन्दा इति ॥ कन्दरेभ्यो दरीभ्यः कन्दाः जीवनसाधनभूताः प्रलयं नाशमुपगताः किम्, तथा गिरिभ्यः पर्वतेभ्यो निर्झरा उदकप्रवाहाः प्रलयमुपगताः किम् । वाथवा तरुभ्यो वृक्षेभ्यो रसेन सहितानि फलानि बिभ्रति ताः तथा वल्कलिन्यो वल्कलवत्यश्च शाखाः प्रध्वस्ता नष्टाः किम् ।

तदुक्तं भागवते द्वितीयस्कन्धे—"चीराणि किं पथि न संति दिशन्ति भिक्षां नैवाङ्घ्रिपाः परभृतः सरितोऽप्यशुष्यन् । रुद्धा गुहाः किमजितोऽवति नोपसन्नान्कस्माद्भजन्ति कवयो धनदुर्मदान्धान् ॥" इति । यद्यस्माद्धेतोः प्रसभं सवेन यथास्यात्तथा अपगतः प्रश्रयो विनयो येषां तेषां खलानां दुःखेनोपात्तं प्राप्तमल्पं वित्तं तस्य स्मयो गर्वः स एव पवनो वायुरोगस्तेन नर्तिता भ्रूलता येषु तानि एवंविधानि मुखानि लोकैर्वीक्ष्यन्तेऽवलोक्यन्ते । स्रग्धरा वृत्तम् ॥

आयाससाध्यपरपिण्डोपजीवनापेक्षया हिमवत्संबन्धिवनाश्रयणेन जीवनं वरमित्याह—

गङ्गातरङ्गहिमशीकरशीतलानि
विद्याधराध्युषितचारुशिलातलानि ।
स्थानानि किं हिमवतः प्रलयं गतानि
यत्सावमानपरपिण्डरता मनुष्याः ॥ ६८ ॥

गङ्गातरङ्गेति ॥ हिमवतो हिमाद्रेः स्थानानि प्रलयं नाशं गतानि किम् । यद्यस्माद्धेतोः मनुष्याः अवमानेनापमानेन सहितो यः परपिण्डोऽन्यदत्तपिण्डस्तस्मिन् रता भवन्तीति शेषः । कीदृशानि स्थानानि । गङ्गाया भागीरथ्यास्तरङ्गा वीचयस्तत्संबन्धिनो ये हिमशीकराः शीताम्बुकणास्तैः शीतलानि । तथा विद्याधरैरध्युषितान्यधिष्ठितानि चारूणि शिलातलानि येषां तानि । वसन्ततिलका वृत्तम् ॥

आशुविनाशिनि शरीरे आशा न विधेयेति मेर्वादिदशाकथनपूर्वकमाह—

यदा मेरुः श्रीमान्निपतति युगान्ताग्निदलितः
समुद्राः शुष्यन्ति प्रचुरमकरग्राहनिलयाः ।
धरा गच्छत्यन्तं धरणिधरपादैरपि धृता
शरीरे का वार्ता करिकरभकर्णाग्रचपले ॥ ६९ ॥

यदेति ॥ युगान्ते योऽग्निस्तेन दलितः श्रीमान् मेरुर्यदा निपतति । यदेत्यस्य सर्वत्र संबन्धः । यदा प्रचुरा ये मकरा ग्राहाश्च तेषां निलयो गृहं येषु ते एवंविधाः समुद्रा अपि शुष्यन्ति । यदा धरणिधराणां पर्वतानां पादैर्धृताऽपि धरा अन्तं नाशं गच्छति । तदा करिणो गजस्य कलभः शिशुस्तस्य कर्णाग्रं तद्वच्चपले चञ्चले एतादृशे शरीरे का वार्ता कथा । न कापीत्यर्थः । शिखरिणी वृत्तम् ॥

संसारहेतुभूतानि नानाविधानि कर्माण्याचरन्नतिखिन्नः पुरुषो वैराग्यपूर्वकं स्वस्मिन् कर्मनिर्मूलनसामर्थ्यं प्रार्थयन्नाह—

**एकाकी निःस्पृहः शान्तः पाणिपात्रो दिगम्बरः ।**
**कदा शंभो भविष्यामि कर्मनिर्मूलनक्षमः ॥ ७० ॥**

एकाकीति ॥ एकाकी संगरहितः, निःस्पृहः आशारहितः, शांतः शमादिसंपन्नः, पाणिः कर एव पात्रं भाजनं यस्य एवंविधः, दिश एवाम्बरं वस्त्रं यस्य एवंविधोऽहम् । हे शंभो, कर्मणां निर्मूलनं नाशनं तत्र क्षमः समर्थ एतादृशः कदा भविष्यामि । अनुष्टुब् वृत्तम् ॥

संपत्त्यादीनामतितुच्छत्वं बुद्ध्वा भक्त्यादिपुरःसरं वैराग्यमेव संपादनीयमित्यर्थं बोधयन्नाह प्राप्ता इत्यादिश्लोकत्रयेण—

**प्राप्ताः श्रियः सकलकामदुघास्ततः किं**
**दत्तं पदं शिरसि विद्विषतां ततः किम् ।**
**संमानिताः प्रणयिनो विभवैस्ततः किं**
**कल्पं स्थितं तनुभृतां तनुभिस्ततः किम् ॥ ७१ ॥**

प्राप्ता इति ॥ सकलाश्च ते कामास्तान् दुहन्ति ताः । सकलकामपूरणसमर्था इत्यर्थः । एवंविधाः श्रियः प्राप्ताः ततः किम् । न किमपि फलमित्यर्थः । एवमुत्तरत्र सर्वत्र बोध्यम् । तथा विद्विषां शत्रूणां शिरसि पदं चरणं दत्तं ततः किम्, तथा प्रणयिनः सेवकाः विभवैर्गजाद्यैश्वर्यैः संमानितास्ततः किम्, तथा तनुभृतां प्राणिनां तनुभिः शरीरैः कल्पं कल्पपर्यंतं स्थितं ततः किम् । वसन्ततिलका वृत्तम् ॥

**जीर्णा कन्था ततः किं सितममलपटं पट्टसूत्रं ततः कि-**
**मेका भार्या ततः किं हयकरिसुगणैरावृतो वा ततः किम् ।**
**भक्तं भुक्तं ततः किं कदशनमथवा वासरान्ते ततः किं**
**व्यक्तज्योतिर्न चान्तर्मथितभवभयं वैभवं वा ततः किम् ॥ ७२ ॥**

जीर्णेति ॥ जीर्णा कन्था लब्धेति शेषः । एवमुत्तरत्रापि शेषः पूरणीयः । ततः किं तेन किं सुखादि । न किमपीत्यर्थः । एवमुत्तरत्रापि बोध्यम् । सितं शुभ्रं अमलं निर्मलं पटं वस्त्रमथवा पट्टसूत्रं दुकूलादिकं ततः किम् । "पटश्चित्रपटे वस्त्रेऽस्त्री" इति मेदिनी । एका अद्वितीया भार्या पत्नी ततः किम् । हया अश्वाः करिणो गजाश्च तेषां शोभना गणाः समूहास्तैरावृतो व्याप्तो वा ततः किम् । भक्तमोदनं भुक्तं ततः किम् । "भिस्सा स्त्रीभक्तमन्धोऽन्नमोदनो-

ऽस्त्री सदीदिविः" इत्यमरः । अथवा वासरान्ते दिनान्ते कदशनं कुत्सितभोजनं ततः किम् । तथा व्यक्तं प्रत्यक्षं ज्योतिर्ब्रह्म यस्मिंस्तथाविधं, मथितं भवभयं संसारभयं येनैवंविधं अन्तर्हृदये वैभवं वा न ततः किम् । स्रग्धरा वृत्तम् ॥

भक्तिर्भवे मरणजन्मभयं हृदिस्थं
स्नेहो न बन्धुषु न मन्मथजा विकाराः ।
संसर्गदोषरहिता विजना वनान्ता
वैराग्यमस्ति किमतः परमर्थनीयम् ॥ ७३ ॥

भक्तिरिति ॥ यस्य भवे भक्तिरस्तीति शेषः । एवमुत्तरत्रापि यथायोग्यं शेषः पूरणीयः । हृदि अन्तःकरणे तिष्ठतीति हृदिस्थं, मरणं च जन्म च तयोर्भयम् । तथा बन्धुषु स्नेहः प्रीतिर्न । तथा मन्मथात्कामाज्जाता मन्मथजा विकारा न । तथा विजना जनरहिता अत एव संसर्गाद्यो दोषस्तेन रहिता एतादृशा वनान्ताः सन्ति अतः परं तस्य पुरुषस्य वैराग्यं अर्थनीयं प्रार्थनीयं किमस्ति । न किमपीत्यर्थः । वसन्ततिलका वृत्तम् ॥

विषयत्यागपूर्वकं ब्रह्मचिन्तनमेव श्रेयस्करं नान्यदिति चित्तं प्रति बोधयन्नाह श्लोकद्वयेन—

तस्मादनन्तमजरं परमं विकासि
तद्ब्रह्म चिन्तय किमेभिरसद्विकल्पैः ।
यस्यानुषङ्गिण इमे भुवनाधिपत्य-
भोगादयः कृपणलोकमता भवन्ति ॥ ७४ ॥

तस्मादिति ॥ तस्माद्धेतोः हे जन, न विद्यतेऽन्तो यस्य तदनन्तमन्तरहितम्, परममुत्कृष्टं विकासि प्रकाशरूपम् । "विशोकम्" इति पाठे शोकरहितमित्यर्थः । एतादृशं तदुपनिषदादिप्रतिपादितं ब्रह्म चिन्तय, एभिः असद्विकल्पैः देहभावादिविकल्पैः किम् । तत्किम् । यस्माद्धेतोः कृपणलोकानां मता मान्या इमे भुवनस्य त्रिभुवनस्याधिपत्यं स्वामित्वं तत्संबन्धिनो भोगादयः पदार्था यस्यानुषङ्गिणोऽनुयायिनो भवन्ति । यस्यानुयायिनः सर्वे भोगा भवन्ति तद्ब्रह्म चिन्तनीयमित्यर्थः । वसन्ततिलका वृत्तम् ॥

पातालमाविशसि यासि नभो विलङ्घ्य
दिङ्मण्डलं भ्रमसि मानस चापलेन ।
भ्रान्त्वापि जातु विमलं कथमात्मनीनं
तद्ब्रह्म न स्मरसि निर्वृतिमेषि येन ॥ ७५ ॥

पातालमिति ॥ हे मानस हे चित्त, त्वं चापलेन चापल्येन पातालमाविशसि प्रविशसि, तथा नभ आकाशं विलङ्घ्योल्लङ्घ्य यासि गच्छसि, तथा दिङ्मण्डलं भ्रमसि, भ्रान्त्वाऽऽपि जातु कदाचित् विमलं निर्मलं तथा आत्मने हितमात्मनीनं "आत्मन् विश्वजनभोगोत्तरपदात्खः" इति खप्रत्ययः। तद्ब्रह्म न स्मरसि तत्किम्। येन निर्वृतिं मोक्षसुखमेषि प्राप्नोषि। मानसचापलेनेत्येकं पदं वा कर्तव्यं तत्पक्षे जनेति संबोधनं देयम्। भ्रान्त्वेत्यत्र ["भ्रान्त्या" इति पाठे] भ्रान्त्यापि न स्मरसीत्यन्वयः। वसन्ततिलका वृत्तम् ॥

सांसारिकव्यापारैः खिन्नस्य पुरुषास्याक्रोशपूर्वकमुक्तिमाह—

**रात्रिः सैव पुनः स एव दिवसो मत्वा बुधा जन्तवो**
**धावन्त्युद्यमिनस्तथैव निभृतप्रारब्धतत्तत्क्रियाः।**
**व्यापारैः पुनरुक्तभुक्तविषयैरेवं विधेनामुना**
**संसारेण कदर्थिताः कथमहो मोहान्न लज्जामहे ॥ ७६ ॥**

रात्रिरिति ॥ सैव रात्रिः, पुनः स एव दिवस इति मत्वा कालक्रमेण गतागतयो रात्रिदिवसयोरुद्योगं विना, व्यर्थत्वं बुद्ध्वेत्यर्थः। उद्यमिन उद्योगवन्तस्तथैव निभृता धृताः पोषिता वा प्रारब्धाश्च तास्ताः क्रिया यैस्ते एवंविधा अबुधा जन्तवः प्राणिनः पुनरुक्ताश्च ते भुक्ताश्च विषया येषु तैर्व्यापारैर्निमित्तैः कृत्वा मोहाद्धावन्ति, एवंविधेनामुना संसारेण कदर्थिता दुःखिता अपि वयं कथं न लज्जामहे। अपि तु लज्जामह इत्यर्थः। अहो इति खेदे। शार्दूलविक्रीडितं वृत्तम् ॥

वैराग्यवतः पुरुषस्य नृपतेश्च साम्यदर्शनेन राजैश्वर्यस्यातितुच्छत्वं बोधयन्नाह द्वाभ्याम्—

**मही रम्या शय्या विपुलमुपधानं भुजलता**
**वितानं चाकाशं व्यजनमनुकूलोऽयमनिलः।**
**स्फुरद्दीपश्चन्द्रो विरतिवनितासंगमुदितः**
**सुखं शान्तः शेते मुनिरतनुभूतिर्नृप इव ॥ ७७ ॥**

महीति। मुनिः शान्तः सन् नृप इव सुखं यथा स्यात्तथा शेते निद्राति। कीदृशो मुनिर्नृपश्च। विरतिर्वैराग्यमेव वनिता स्त्री तस्याः सङ्गेन मुदितो हर्षितः, पक्षे विशेषेण रतिः प्रीतिर्यस्यां एवंविधा या वनिता तस्याः सङ्गेन मुदितः। पुनः कीदृशः। न तन्वी अल्पा भूतिरैश्वर्यं पक्षे राज्यलक्ष्मीर्यस्यैवंविधः। ऐश्वर्यमेवाह—महीति। मही पृथ्वी यस्य मुनेः रम्या मनोहरा शय्या, तथा

भुजलता बाहुलता विपुलं विस्तीर्णं उपधानमुपधीयते आरोप्यते शिरो यत्र तत् उपबर्हः । भाषायां "उशी" इति ख्याता । "उपधानं तूपबर्हः" इत्यमरः। आकाशं वितानमुल्लोचः । भाषायां "चांदवा" इति ख्यातः । "अस्त्री वितानमुल्लोचः" इत्यमरः । अयमनुकूलोऽनिलो वायुः व्यजनं तालवृन्तकम् । "पंखा" इति ख्यातः। "व्यजनं तालवृन्तकम्" इत्यमरः। तथा चन्द्रश्चन्द्रमाः स्फुरन्देदीप्यमानो दीप इति । शिखरिणी वृत्तम् ॥

**त्रैलोक्याधिपतित्वमेव विरसं यस्मिन्महाशासने**
**तल्लब्ध्वासनवस्त्रमानघटने भोगे रतिं मा कृथाः ।**
**भोगः कोऽपि स एक एव परमो नित्योदितो जृम्भते**
**यत्स्वादाद्विरसा भवन्ति विषयास्त्रैलोक्यराज्यादयः ॥ ७८ ॥**

त्रैलोक्येति ॥ हे जन, आत्मन्निति वा यस्मिन् महच्च तच्छासनं चोपनिषदुपदिष्टब्रह्मज्ञानं तस्मिन् सति त्रैलोक्यस्याधिपतित्वं स्वामित्वं विरसं सारहीनमेव भवति तज्ज्ञानं लब्ध्वा त्वं आसनं वस्त्रं च मानश्च तेषां घटनं यस्मिंस्तस्मिन् भोगे रतिं प्रीतिं मा कृथाः मा कुरु । तर्हि कस्मिन्भोगे प्रीतिः कर्तव्येत्यत्राह—भोग इति । परम उत्कृष्टो नित्यश्चासावुदितः शास्त्रेषु उदयं प्राप्तः । कथित इति यावत् । एवंविधः कोऽप्यनिर्वचनीयः स एक एव भोगो ब्रह्मज्ञानविषयको जृम्भते विकासते, यस्य स्वादाद्ग्रहणात्त्रैलोक्यस्य राज्यमादि येषां ते एवंविधा विषया विरसा रसहीना भवन्ति । शार्दूलविक्रीडितं वृत्तम् ॥

क्षणभङ्गुरान् सर्वान्सांसारिकान्व्यापारान्विहाय एकं ब्रह्मप्राप्तिसाधनभूतं व्यापारमेव कुर्यादिति द्योतयन्नाह श्लोकद्वयेन—

**किं वेदैः स्मृतिभिः पुराणपठनैः शास्त्रैर्महाविस्तरैः**
**स्वर्गग्रामकुटीनिवासफलदैः कर्मक्रियाविभ्रमैः ।**
**मुक्त्वैकं भवबन्धदुःखरचनाविध्वंसकालानलं**
**स्वात्मानन्दपदप्रवेशकलनं शेषा वणिग्वृत्तयः ॥ ७९ ॥**

किं वेदैरिति ॥ वेदैः कर्मकाण्डविषयकश्रुतिभिः, तथा स्मृतिभिर्धर्मार्थकामप्रवर्तिकाभिः, तथा पुराणानां व्रतादिबोधकानां पठनानि तैः, तथा महान् विस्तरः पूर्वपक्षादिरूपो येषु तैः शास्त्रैः गौतमीयादिभिः, तथा स्वर्गरूपो ग्रामस्तस्मिन् या कुटी गृहं तस्मिन् यो निवासस्तस्य फलं ददतीति ते तैः कर्मणां यागादिकर्मणां क्रिया करणं तस्या विभ्रमा विलासास्तैश्च किम् । न किमपीत्यर्थः । एतैः पूर्वोक्तैः सर्वैर्वृत्तिसंपादनमतितुच्छमिति बोधयन्नाह—मुक्त्वै-

कमिति । भवबन्धेन संसारबन्धेन यद्दुःखं तस्य रचना तस्या विध्वंसो नाशस्तस्मिन् कालानलं प्रलयाग्निसदृशमेवंविधमेकं मुख्यं स्वस्यात्मनो यदानन्दपदमानन्दरूपं स्थानं तस्मिन् यः प्रवेशस्तस्य कलनं संपादनं मुक्त्वा शेषा अवशिष्टा वेदाभ्यासादिना जीवनरूपाः वणिग्वृत्तयो वणिग्व्यापारा भवन्तीति शेषः । शार्दूलविक्रीडितं वृत्तम् ॥

**आयुः कल्लोललोलं कतिपयदिवसस्थायिनी यौवनश्री-**
**रर्थाः संकल्पकल्पा घनसमयतडिद्विभ्रमा भोगपूराः ।**
**कण्ठाश्लेषोपगूढं तदपि च न चिरं यत्प्रियाभिः प्रणीतं**
**ब्रह्मण्यासक्तचित्ता भवत भवभयाम्बोधिपारं तरीतुम् ॥ ८० ॥**

आयुरिति ॥ आयुर्जीवितं कल्लोलवज्जलतरङ्गवल्लोलं चञ्चलमस्तीति शेषः। एवमुत्तरत्रापि बोध्यम् । यौवनश्रीस्तारुण्यशोभा कतिपयदिवसान् तिष्ठति तच्छीला स्थायिनी । अचिरस्थायिनीत्यर्थः । तथा अर्था धनानि संकल्पकल्पा मनोरथतुल्याः । मनोरथवदाशुविनाशिन इत्यर्थः । तथा भोगपूरा विषयसुखप्रवाहाः घनसमये वर्षाकाले या तडिद्विद्युल्लता तद्वद्विभ्रमो विलासो येषामेवंविधाः । विद्युद्वदतिचञ्चला इत्यर्थः । तथा प्रियाभिः स्त्रीभिः यत्प्रणीतं कृतं कण्ठस्याश्लेष आलिङ्गनं तत्पूर्वकमुपगूढमावरणम् । भावे क्तः । तदपि चिरं चिरकालं न तस्मात् हे जनाः, यूयं भवभयं संसारभयमेवाम्भोधिः समुद्रस्तस्य पारं परतीरं तरीतुमुल्लङ्घ्य गन्तुं ब्रह्मणि आसक्तं चित्तं येषां ते एवंविधा भवत । स्रग्धरा वृत्तम् ॥

विचारवान्पुरुषो लोभाभिभूतो न भवतीति समुद्रदृष्टान्तपुरःसरमाह—

**ब्रह्माण्डमण्डलीमात्रं किं लोभाय मनस्विनः ।**
**शफरीस्फुरितेनाब्धेः क्षुब्धता जातु जायते ॥ ८१ ॥**

ब्रह्माण्डेति ॥ ब्रह्माण्डस्य मण्डली समूहस्तन्मात्रं मनस्विनो विवेकिनः पुरुषस्य लोभाय जायते किम् । अपि तु न जायते । तत्र दृष्टान्तमाह—शफरीति । शफर्या मत्स्यविशेषस्य स्फुरितेन स्फुरणेनाब्धेः समुद्रस्य क्षुब्धता क्षोभो जातु कदाचिदपि जायते किमपि तु न जायते । तथा "न तु जायते" इति पाठे स्पष्टोऽर्थः । अनुष्टुब् वृत्तम् ॥

सारासारविवेकवतः पुरुषस्य विवेकवशात्सर्वत्र ब्रह्मभावो भवतीति विषयाक्रोशपूर्वकमाह—

**यदासीदज्ञानं स्मरतिमिरसंस्कारजनितं**
**तदा दृष्टं नारीमयमिदमशेषं जगदपि ।**

इदानीमस्माकं पटुतरविवेकाञ्जनजुषां
समीभूता दृष्टिस्त्रिभुवनमपि ब्रह्म मनुते ॥ ८२ ॥

यदेति ॥ यदा स्मरः काम एव तिमिरमन्धकारस्तस्य संस्कारस्तेन जनितमुत्पादितमज्ञानमासीत्तदा इदमशेषं सकलमपि जगत् नारीमयं स्त्रीप्रचुरमासीत् । "रामामयम्" इत्यपि पाठः । इदानीं पटुतरो यो विवेकः सदसद्विचारः स एवाञ्जनं नेत्राञ्जनं तत् जुषन्ति सेवन्ते ते जुषस्तेषां सदसद्विवेकवतामस्माकं समीभूता समत्वं प्राप्ता शत्रुमित्रौदासीन्यरहिता । एकरूपेत्यर्थः । एवंविधा दृष्टिस्त्रिभुवनमपि ब्रह्म मनुते मानयतीत्यर्थः । "तनुते" इति पाठे विस्तारयति । करोतीत्यर्थः । शिखरिणी वृत्तम् ॥

चित्तस्थैर्याभावे सकलं रम्यमपि वस्तु अरम्यमिव प्रतिभात्यतश्चित्तस्थैर्यमेव संपादनीयमिति बोधयन्नाह—

रम्याश्चन्द्रमरीचयस्तृणवती रम्या वनान्तस्थली
रम्यः साधुसमागमः शमसुखं काव्येषु रम्याः कथाः ।
कोपोपाहितबाष्पबिन्दुतरलं रम्यं प्रियाया मुखं
सर्वं रम्यमनित्यतामुपगते चित्ते न किंचित्पुनः ॥ ८३ ॥

रम्या इति ॥ चन्द्रमरीचयश्चन्द्रकिरणा रम्याः सन्तीति शेषः । एवमुत्तरत्रापि शेषः पूरणीयः । तृणानि हरिततृणानि सन्ति यस्यां सा तृणवती वनान्तस्थली वनमध्यस्थभूमिः रम्या, तथा साधूनां समागमः संगतिः रम्या, तथा शमसुखं शान्तिसुखं रम्यम्, तथा काव्येषु कथा वार्ता रम्याः । "प्रणयिनां रम्या मनोज्ञा गिरः" इति पाठे प्रणयिनां प्रेमवतां पुरुषाणां मनोज्ञा मनोहरा गिरो वाचो रम्या इत्यर्थः । तथा कोपेन क्रोधेनोपाहितः प्राप्तो यो बाष्पबिन्दुरश्रुबिन्दुस्तेन तरलं चञ्चलं प्रियायाः स्त्रिया मुखं रम्यम् । एतत्सर्वं रम्यमपि चित्तेऽनित्यतामध्रुवताम् । अस्थिरतामिति यावत् । उपगते सति पुनः किंचिदपि रम्यं न भवतीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥

भिक्षाशित्वादिगुणविशिष्टस्य जनस्य जगति दौर्लभ्यमाह—

भिक्षाशी जनमध्यसंगरहितः स्वायत्तचेष्टः सदा
दानादानविरक्तमार्गनिरतः कश्चित्तपस्वी स्थितः ।
रथ्याक्षीणविशीर्णजीर्णवसनैः संप्रोतकन्थाधरो
निर्मानो निरहंकृतिः शमसुखाभोगैकबद्धस्पृहः ॥ ८४ ॥

भिक्षाशीति ॥ भिक्षामश्नातीति भिक्षाशी । तथा जनमध्ये यो संगस्तेन रहितः, तथा स्वायत्ता स्वाधीना चेष्टा इन्द्रियव्यापारो यस्य सः । जितेन्द्रिय

इति यावत्। तथा सदा सर्वकालं दानं सत्पात्रेभ्यो द्रव्यसमर्पणं आदानं द्रव्यग्रहणं च ताभ्यां विरक्तो रहितो यो मार्गस्तस्मिन् निरतस्तत्परः तथा रथ्यायां ग्रामाभ्यन्तरमार्गे क्षीणानि स्वल्पानि विशीर्णानि पतितानि जीर्णानि च यानि वस्त्राणि तैः कृत्वा संप्रोता ग्रथिता या कन्था तस्या धरः, तथा निर्गतो मानः परकृतसत्काराभिलाषो यस्य, तथा निर्गता नष्टा अहंकृतिरहंकारो यस्य सः, तथा शमसुखं शान्तिसुखं तस्याभोगो विस्तारस्तस्मिन्बद्धा स्पृहा येन स एवंविधः स्थितो निर्व्यापारतया तिष्ठन्नेवंविधस्तपस्वी कश्चिदेव जनो भवति न बहव इत्यर्थः। "मनस्वी जन" इति पाठे मनस्वी विवेकवानित्यर्थः। शार्दूलविक्रीडितं वृत्तम्॥

सांसारिके सुखे विरक्तः कश्चित्पुरुषः पृथिव्यादिपञ्चभूतेषु मातृत्वादिकं परिकल्प्य तैः सहारण्ये संवसंस्तत्प्रसादेन प्राप्तज्ञानस्तेषामेवोपकारं मन्वानस्तानि प्रार्थयते—

**मातर्मेदिनि तात मारुत सखे तेजः सुबन्धो जल**
**भ्रातर्व्योम निबद्ध एष भवतामग्रे प्रणामाञ्जलिः।**
**युष्मत्सङ्गवशोपजातसुकृतोद्रेकस्फुरन्निर्मल-**
**ज्ञानापास्तसमस्तमोहमहिमा लीये परे ब्रह्मणि॥ ८५॥**

मातरिति॥ हे मातः, मातृवत्पोषकत्वेन मातृतुल्ये हे मेदिनि पृथ्वि, हे तात पितृवत्सुखदत्वेन पितृतुल्य हे मारुत वायो, हे सखे सुहृद्वद्धितकारित्वेन तत्तुल्य हे तेजः अग्ने, एवमुत्तरत्राप्यूहनीयम्। हे सुबन्धो जल, हे भ्रातर्व्योम आकाश, भवतामग्रे एष प्रणामयुक्तोऽञ्जलिर्हस्तसंपुटो निबद्धः कृतः। "अन्त्यः प्रणामाञ्जलिः" इति पाठे अन्ते भवोऽन्त्य इत्यर्थः। युष्माकं संगवशेनोपजातो यः सुकृतस्योद्रेक आधिक्यं तेन स्फुरत्स्फुरद्रूपं यन्निर्मलं ज्ञानं तेनापास्तो निरस्तः समस्तो मोहमहिमा संसारकारणीभूतोऽज्ञानरूपो यस्य एवंविधोऽहं परे ब्रह्मणि लीये लयं प्राप्नोमि। सति ब्रह्मणि लये सर्वथा भेदनिवृत्त्या प्रणामस्यासंभवादन्तिमोऽयं प्रणाम इति भावः। शार्दूलविक्रीडितं वृत्तम्॥

यावच्छरीरादिस्वास्थ्यमस्ति तावदेवात्मनः श्रेयःसंपादने यत्नो विधेय इत्याह—

**यावत्स्वस्थमिदं शरीरमरुजं यावज्जरा दूरतो**
**यावच्चेन्द्रियशक्तिरप्रतिहता यावत्क्षयो नायुषः।**
**आत्मश्रेयसि तावदेव विदुषा कार्यः प्रयत्नो महा-**
**न्संदीप्ते भवने तु कूपखननं प्रत्युद्यमः कीदृशः॥ ८६॥**

यावदिति ॥ इदं शरीरं अरुजं न विद्यते रुक् रोगो यस्मिंस्तत् एवंविधं रोगरहितं सत् यावत् स्वस्थमव्यग्रमस्ति, "कलेवरगृहा" इति पाठे शरीरगृहमित्यर्थः । जरा वार्धक्यमपि यावद्दूरतस्तिष्ठतीति शेषः, यावद्वार्धकं न प्राप्तमित्यर्थः । इन्द्रियाणां शक्तिः सामर्थ्यमपि यावदप्रतिहताऽकुण्ठिता, आयुषोऽपि क्षयो नाशो यावन्न, तावदेव विदुषा पण्डितेन आत्मनः श्रेयसि कल्याणे महान् प्रकृष्टो यत्नः कार्यः । तथा हि भवने गृहे संदीप्ते अग्निना प्रज्वलिते सति तु कूपस्य खननं प्रति उद्यम उद्योगः कीदृशः। व्यर्थ इत्यर्थः । "प्रोद्दीप्ते भवने" इति, तथा "हर्म्ये प्रज्वलिते च" इत्यपि पाठौ क्वचित् । प्रज्वलिते गृहे तच्छान्त्यर्थं तत्काले कूपखननादिप्रयासो यथा व्यर्थस्तथा शरीरस्वास्थ्याद्यभावे श्रेयःसंपादनयत्नो निष्फल इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥

यस्यामवस्थायां यदवश्यं संपादनीयं तदसंपादयतः पुरुषस्याऽऽयुषो वैयर्थ्यमिति सूचयन्नाह—

**नाभ्यस्ता भुवि वादिवृन्ददमनी विद्या विनीतोचिता**
**खड्गाग्रैः करिकुम्भपीठदलनैर्नाकं न नीतं यशः ।**
**कान्ताकोमलपल्लवाधररसः पीतो न चन्द्रोदये**
**तारुण्यं गतमेव निष्फलमहो शून्यालये दीपवत् ॥ ८७ ॥**

नाभ्यस्तेति ॥ येन भुवि पृथिव्यां विनीतानां विनयवतां पुरुषाणामुचिता योग्या, तथा वादिनामनीश्वरादिवादिनां वृन्दं समूहं दमयति तच्छीला एवंविधा विद्या नाभ्यस्ता, तथा खड्गाग्रैरसिधाराभिः कृत्वा करिणां गजानां कुम्भपीठानि गण्डस्थलानि तेषां दलनैर्विदारणैर्यशो नाकं स्वर्गं प्रति न नीतम्, स्वर्गप्रापकं यशो न संपादितमित्यर्थः । तदुक्तं "यशसा प्राप्यते स्वर्गो विपरीतादधोगतिम्" इति । तथा कान्तायाः कोमलपल्लवसदृशो योऽधरोऽधरोष्ठस्तस्य रसः स्वादश्चन्द्रोदये न पीतः, चन्द्रोदयवेलायां कान्ताधरचुम्बनमपि न कृतमित्यर्थः । तस्य पुरुषस्य तारुण्यं यौवनं शून्यालये शून्यगृहे दीपवन्निष्फलमेव गतं नष्टमित्यर्थः । तारुण्यमित्युपलक्षणं सर्वं जीवितमित्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥

एकस्यैव ज्ञानस्याधिकारिभेदेन भेदं दृष्टान्तोपन्यासपूर्वकमाह—

**ज्ञानं सतां मानमदादिनाशनं केषांचिदेतन्मदमानकारणम् ।**
**स्थानं विविक्तं यमिनां विमुक्तये कामातुराणामतिकामकारणम् ॥८८॥**

ज्ञानमिति ॥ यत् ज्ञानं सच्छास्त्रजन्यं ज्ञानं सतां मानश्च मदश्च तावादी

येषां तेषां क्रोधादीनां नाशनं शमनं भवतीति शेषः, तदेव केषांचिदधमपुरुषाणां मदमानयोः कारणं हेतुर्भवति। तत्र दृष्टान्तः। विविक्तं जनरहितमेकान्तमिति यावत्। "विविक्तौ पूतविजनौ" इत्यमरः। यत् स्थानं यमिनां यमनियमादिमतां पुरुषाणां विमुक्तये मोक्षाय भवति तदेव कामातुराणां अति अत्यन्तं कामस्य मदनस्य कारणं भवति। कामोद्दीपनसाधनं भवतीत्यर्थः। इन्द्रवंशा वृत्तम्। "स्यादिन्द्रवंशा ततजैरसंयुतैः" इति तल्लक्षणात्॥

संसारस्य वैचित्र्यं वर्णयन्नाह—

क्वचिद्वीणावादः क्वचिदपि च हाहेति रुदितं
क्वचिन्नारी रम्या क्वचिदपि जराजर्जरवपुः।
क्वचिद्विद्वद्गोष्ठी क्वचिदपि सुरामत्तकलहो
न जाने संसारः किममृतमयः किं विषमयः॥ ८९॥

क्वचिदिति॥ क्वचित् वीणाया वादो वादनं भवतीति शेषः। एवं सर्वत्रापि बोध्यम्। क्वचिदपि हा हा इति रुदितं रोदनं, क्वचित् रम्या मनोहरा नारी स्त्री, क्वचिदपि जरया जर्जरं वपुः शरीरं यस्या एवंविधा स्त्री, क्वचित् विदुषां पण्डितानां गोष्ठी वार्ता, क्वचिदपि सुरया मद्येन ये मत्तास्तेषां कलहः, एवंभूताः संसारः किममृतमयः सुधाप्रचुरः किं विषमयः विषप्रचुर इत्यहं न जाने। एवंविधवैचित्र्यशालिनः संसारस्य दुर्निरूपत्वमिति भावः। शिखरिणी वृत्तम्॥

मनोरथादिकं विहाय मुक्तिसाधनं शिवचरणध्यानमेव सर्वदा कर्तव्यमित्याह—

जीर्णा एव मनोरथाः स्वहृदये यातं च तद्यौवनं
हन्ताङ्गेषु गुणाश्च वन्ध्यफलतां याता गुणज्ञैर्विना।
किं युक्तं सहसाऽभ्युपैति बलवान् कालः कृतान्तोऽक्षमी
ह्याज्ञातं स्मरशासनाङ्घ्रियुगलं मुक्त्वाऽस्ति नान्या गतिः॥ ९०॥

जीर्णा एवेति॥ मनोरथाः स्वहृदय एव जीर्णाः सन्तीति शेषः। तथा तत्प्रसिद्धं यौवनं तारुण्यं यातं गतम्, हन्तेति खेदे। अङ्गेषु गुणाः शौर्यौदार्यादयश्च गुणज्ञैर्गुणग्राहकैर्विना वन्ध्यफलतां निष्फलत्वं याताः प्राप्ताः, बलवान् बलिष्ठः, न क्षमतेऽसौ अक्षमी क्षमारहित इत्यर्थः। तथा कृतोऽन्तो नाशो येनैवंविधो यमस्वरूपी कालः सहसाऽभ्युपैति प्राप्नोति "कृतान्तो यमुनाभ्राता शमनो यमराड्यमः" इत्यमरः। आ इति स्मरणे ज्ञातम्। मयेति शेषः। "आ प्र-

गृह्य स्मृतौ'' इत्यमरः। किं ज्ञातम्। स्मरं कामं शास्तीति तथाविधः शिवस्तस्याङ्घ्रियुगलं मुक्त्वा त्यक्त्वा तद्भिन्नेत्यर्थः। अन्या गतिर्नास्तीत्यर्थः। ''कालो हि सर्वान्तकृन्न ध्यातं मधुसूदनाङ्घ्रियुगलं मुक्तेस्तु नान्या गतिः'' इति पाठे सर्वान्तकृत् सर्वेषां प्राणिनामन्तं नाशं करोत्येवंविधो बलवान्कालः सहसाऽभ्युपैति प्राप्नोति हि निश्चयेन तथाऽपि मधुसूदनस्य विष्णोरङ्घ्रियुगलं न ध्यातं न चिन्तितम्। मुक्तेस्तु अन्या तदङ्घ्रियुगलध्यानादपरा गतिर्नास्तीति शेषः। अधुना किं युक्तं किं योग्यम्। कार्याकार्यविचाराशून्योऽहं जातोऽस्मीति भावः। शार्दूलविक्रीडितं वृत्तम्॥

अतिक्लेशसाध्ये पारमार्थिकसुखे सुखत्वबुद्धिमकृत्वा तृषादिशान्तौ सुखं मन्वानं पुरुषं निन्दति—

**तृषा शुष्यत्यास्ये पिबति सलिलं स्वादु सुरभि**
**क्षुधार्तः सन् शालीन् कवलयति शाकादिचलितान्।**
**प्रदीप्ते रागाग्नौ सुदृढतरमाश्लिष्यति वधूं**
**प्रतीकारो व्याधेः सुखमिति विपर्यस्यति जनः॥ ९१॥**

तृषेति॥ जनो लोकः आस्ये मुखे तृषा शुष्यति सति स्वादु मधुरं, तथा सुरभि सुगन्धि एतादृशं सलिलं जलं पिबति, तथा क्षुधार्तः सन् शाकादिभिर्वलितान्वेष्टितान् शालीन् ओदनान् कवलयति भक्षयति, तथा रागाग्नौ अनुरागवह्नौ प्रदीप्ते ज्वलिते सति वधूं स्वकान्तां सुदृढतरं यथा स्यात्तथा आश्लिष्यति आलिङ्गति। एवं व्याधेः पिपासादिव्याधेः प्रतीकारो दूरीकरणं सुखमिति विपर्यस्यति विपरीतज्ञानवान् भवति। वास्तवं सुखं येन भवति तद्विहाय तृषादिशान्तेः सुखत्वं मनुते इति भावः। शिखरिणी वृत्तम्॥

उदरभरणमात्रफलिकया राजादिसेवया खिन्नः कश्चिदितरसेवा न कर्तव्येतीतरान् शिक्षयन्नाह स्नात्वेत्यादिश्लोकद्वयेन—

**स्नात्वा गाङ्गैः पयोभिः शुचिकुसुमफलैरर्चयित्वा विभो त्वां**
**ध्येये ध्यानं नियोज्य क्षितिधरकुहरग्रावपर्यङ्कमूले।**
**आत्मारामोऽफलाशी गुरुवचनरतस्त्वत्प्रसादात्स्मरारे**
**दुःखं मोक्ष्ये कदाऽहं समचरणकरे पुंसि सेवासमुत्थम्॥ ९२॥**

स्नात्वेति॥ हे विभो, अहं गाङ्गैः पयोभिर्जलैः स्नात्वा, शुचीनि कुसुमानि पुष्पाणि फलानि च तैस्त्वां अर्चयित्वा पूजयित्वा क्षितिधरस्य पर्वतस्य कुहरं दरी तत्संबन्धिनो ये ग्रावाणः पाषाणास्त एव पर्यङ्कः शय्या तस्याः मूले

ध्येये ध्यातुं योग्ये त्वयि ध्यानं नियोज्य योजयित्वा आत्मनि स्वस्वरूपे रमतेऽसौ आत्मारामः एवंविधः सन् हे स्मरारे कामनाशक त्वत्प्रसादात् त्वत्कृपातः समौ स्वसमानौ चरणौ करौ च यस्य तस्मिन्नेतादृशे पुंसि पुरुषे सेवायाः संकाशात्समुत्थमुत्पन्नं दुःखं कदा मोक्ष्ये । कीदृशोऽहं न विद्यते फलस्य स्वर्गादेराशा यस्यास्तीति सः तथा गुरोः वचने रतः स्थितः । स्रग्धरा वृत्तम् ॥

**शय्या शैलशिला गृहं गिरिगुहा वस्त्रं तरूणां त्वचः**
**सारङ्गाः सुहृदो ननु क्षितिरुहां वृत्तिः फलैः कोमलैः ।**
**येषां नैर्झरमम्बु पानमुचितं रत्यै च विद्याङ्गना**
**मन्ये ते परमेश्वराः शिरसि यैर्बद्धो न सेवाञ्जलिः ॥ ९३ ॥**

शय्येति ॥ शैलशिला पर्वतशिला येषां शय्या शयनम्, शय्यावन्निद्रासुखकारिणीत्यर्थः । येषामिति सर्वत्र संबध्यते । गिरेः पर्वतस्य गुहा गृहम्, गृहवत्स्थातुं योग्येत्यर्थः । तरूणां वृक्षाणां त्वचो वस्त्रम्, वस्त्रवच्छरीराच्छादका इत्यर्थः । सारङ्गा मृगाः पक्षिणो वा सुहृदः सुहृद्वत्कार्यकारिण इत्यर्थः। क्षितिरुहां वृक्षाणां कोमलैः फलैः अन्नवत्क्षुन्निवर्तकैरित्यर्थः । ननु निश्चयेन वृत्तिर्जीविका, नैर्झरं निर्झरसंबन्धि अम्बु जलं उचितं पानं पेयम्, पानकार्यकारीत्यर्थः । विद्यैव येषां रत्यै प्रीत्यै अङ्गना स्त्री, स्त्रीवत्सुखदेत्यर्थः । यैः शिरसि इतरेषां राजादीनां सेवायै अञ्जलिः न बद्धो न कृतः, ते ईश्वराः समर्था इत्यहं मन्ये । शय्यादिविषयान् परित्यज्य वने स्थित्वा भगवदाराधनमेव कर्तव्यमिति भावः । शार्दूलविक्रीडितं वृत्तम् ॥

विपद्ग्रस्ते कुटुम्बे स्पृहां कृत्वा दुःखेन स्थित्यपेक्षया परमसुखदो गङ्गातीरे निवासः श्रेयानिति बोधयन्नाह—

**सत्यामेव त्रिलोकीसरिति हरशिरश्चुम्बिनीविच्छटायां**
**सद्वृत्तिं कल्पयन्त्यां वटविटपभवैर्वल्कलैः सत्फलैश्च ।**
**कोऽयं विद्वान् विपत्तिज्वरजनितरुजाऽतीव दुःखासिकानां**
**वक्त्रं वीक्ष्येत दुःस्थे यदि हि न बिभृयात्स्वे कुटुम्बेऽनुकम्पाम् ९४**

सत्यामिति ॥ यदि हि अतीवात्यन्तं विपत्तिरेव ज्वरस्तेन जनिता या रुक् रोगस्तया दुःस्थे दुःखेनाऽपि स्थातुमशक्ये स्वे स्वकीये कुटुम्बे परिवारे अनुकम्पां दयां न बिभृयान्न धारयेत्तर्हि हरस्य शिवस्य यच्छिरस्तच्चुम्बति तच्छीला हरशिरश्चुम्बिनी एवंविधा नीव्याः स्त्रीकटिवस्त्रबन्धनस्य । काञ्च्या इति यावत् । छटा कान्तिर्यस्यास्तस्याम् । शिवमस्तकस्थितायामित्यर्थः । "नीवीपरि-

पणे स्त्रीणां कटीवस्त्रनिबन्धने" इति मेदिनी । तथा वटविटपो वटवृक्षस्तस्माद्भवैरुत्पन्नैः वल्कलैः, सत्फलैरुत्तमफलैश्च सद्वृत्तिं कल्पयन्त्यां एवंविधायां त्रिलोकीसरिति भागीरथ्यां सत्यामेव दुःखरूपा या आसिकाः स्थितयस्तासां वक्रं कोऽयं विद्वान् वीक्ष्येत पश्येत् अपि तु न कोऽपीत्यर्थः । स्रग्धरा वृत्तम् ॥

वैराग्यपूर्वकं काशीनिवासस्य श्रेष्ठत्वं दर्शयति श्लोकद्वयेन—

**उद्यानेषु विचित्रभोजनविधिस्तीव्रातितीव्रं तपः**
**कौपीनावरणं सुवस्त्रममितं भिक्षाटनं मण्डनम् ।**
**आसन्नं मरणं च मङ्गलसमं यस्यां समुत्पद्यते**
**तां काशीं परिहृत्य हन्त विबुधैरन्यत्र किं स्थीयते ॥ ९५ ॥**

उद्यानेष्विति ॥ यस्यां उद्यानेष्वारामेषु विचित्रोऽनेकप्रकारो भोजनविधिः, तथा तीव्रादतितीव्रं तपः कृच्छ्रचान्द्रायणादि, तथा कौपीनस्य गुह्यस्यावरणमाच्छादकं सुवस्त्रं शोभनवस्त्रम्, तथा अमितपरिमितं भिक्षाटनं मण्डनं शोभाकरम्, तथा आसन्नं समीपस्थं मरणं च यस्यां मङ्गलसमं समुत्पद्यते, तां काशीं परिहृत्य त्यक्त्वा विबुधैरन्यत्र किं किमर्थं स्थीयते हन्तेति खेदे । काश्यामेव सर्वदा निवासः श्रेयस्करो नान्यत्रेति भावः । शार्दूलविक्रीडितं वृत्तम् ॥

**नायं ते समयो रहस्यमधुना निद्राति नाथो यदि**
**स्थित्वा द्रक्ष्यति कुप्यति प्रभुरिति द्वारेषु येषां वचः ।**
**चेतस्तानपहाय याहि भवनं देवस्य विश्वेशितु-**
**र्निर्दौवारिकनिर्दयोक्त्यपरुषं निःसीमशर्मप्रदम् ॥ ९६ ॥**

नायमिति ॥ ते तव अयं समयः कालो न, अधुना नाथः स्वामी रहस्यमेकान्तं यथास्यात्तथा निद्राति, यदि स्थित्वा द्रक्ष्यति तर्हि प्रभुः कुप्यति, इति पूर्वोक्तप्रकारेण येषां द्वारेषु वचो वाक्यं श्रूयते इति शेषः । हे चेतः, तान्पुरुषानपहाय त्यक्त्वा निर्दौवारिकं द्वारपालरहितं च तन्निर्दयया उक्त्या अपरुषं पारुष्यरहितं च, तथा निःसीमं मर्यादारहितं शर्म सुखं प्रकर्षेण ददातीत्येवंविधं विश्वेशितुर्विश्वेश्वरस्य देवस्य भवनं गृहं याहि गच्छ । राजादिद्वारसेवनापेक्षया काश्यां विश्वेश्वरद्वारसेवनमेव श्रेयस्करमिति भावः । शार्दूलविक्रीडितं वृत्तम् ॥

संसारे खिन्नः कश्चित्पुरुषः स्त्रियं संबोध्य दैवकृतेर्दुर्ज्ञेयत्वं वर्णयन्नाह—

**प्रियसखि विपद्दण्डव्रातप्रतापपरम्परा-**
**परिधिचपले चिन्ताचक्रे निधाय विधिः खलः ।**

**मृदमिव बलात्पिण्डीकृत्य प्रगल्भकुलालव-**
**द्भ्रमयति मनो नो जानीमः किमत्र विधास्यति ॥ ९७ ॥**

प्रियसखीति ॥ हे प्रियसखि, खलो दुष्टो विधिः प्रगल्भः प्रौढो यः कुलालः कुम्भकारस्तद्वत् मृदमिव मनश्चित्तं बलाद्बलात्कारेण पिण्डीकृत्य विपद्रूपो यो दण्डव्रातो दण्डसमूहस्तस्य प्रतापपरम्परा तद्रूपो यः परिधिर्मण्डलाकारभ्रमणं तेन चपलं तस्मिन् चिन्ताचक्रे निधाय भ्रमयति, इतःपरं अत्र संसारे किं विधास्यति किं करिष्यतीति वयं नो जानीमः । हरिणी वृत्तम् ॥

उपासनादशायां क्वचिद्रुचिवैचित्र्यादेकस्मिन्भक्त्युदयेऽपि परमार्थतोऽभेदबुद्धिर्न त्याज्येति सूचयन्नाह—

**महेश्वरे वा जगतामधीश्वरे जनार्दने वा जगदन्तरात्मनि ।**
**तयोर्न भेदप्रतिपत्तिरस्ति मे तथाऽपि भक्तिस्तरुणेन्दुशेखरे ॥ ९८ ॥**

महेश्वर इति ॥ जगतां लोकानामधीश्वरे नियन्तरि महेश्वरे शिवे, वाथवा जगतः अन्तरात्मा तस्मिन् जनार्दने विष्णौ वा तयोरुभयोर्देवयोः भेदस्य प्रतिपत्तिर्ज्ञानं नास्ति तथाऽपि तरुण इन्दुश्चन्द्रः शेखरे यस्य तस्मिन् चन्द्रशेखरे मे भक्तिरस्तीत्यर्थः । वंशस्थं वृत्तम् ॥

शिवध्यानैकतत्परे पुरुषे मदनादीनां व्यापारस्य वैफल्यं सूचयन्नाह—

**रे कन्दर्प करं कदर्थयसि किं कोदण्डटङ्कारितैः**
**रेरे कोकिल कोमलैः कलरवैः किं त्वं वृथा जल्पसि ।**
**मुग्धे स्निग्धविदग्धमुग्धमधुरैर्लोलैः कटाक्षैरलं**
**चेतश्चुम्बितचन्द्रचूडचरणध्यानामृतं वर्तते ॥ ९९ ॥**

रे कन्दर्पेति ॥ रे कन्दर्प काम, त्वं कोदण्डस्य धनुषः टङ्कारितैष्टणत्कारैः करं किं किमर्थं कदर्थयसि पीडयसि, हे कोकिल, त्वं कोमलैः कलरवैरव्यक्तमधुरध्वनिभिः वृथा व्यर्थं किं जल्पसि भाषसे, हे मुग्धे सुन्दरस्त्रि, ते स्निग्धाः प्रेमार्द्राश्च विदग्धाः कार्यकरणे निपुणाश्च मुग्धाः सुन्दराश्च मधुराः प्रियाश्च "स्वादुप्रियौ तु मधुरौ" इत्यमरः । तैर्लोलैश्चञ्चलैः कटाक्षैरलं पर्याप्तम् । कुतः। यतो मे चेतः चन्द्रचूडस्य शिवस्य यौ चरणौ तयोर्ध्यानं चिन्तनं तदेवामृतं यस्मिन्नेतादृशं वर्तते । अतः शिवध्यानतत्परे मयि कन्दर्पादिभिः क्रियमाणाः सर्वे यत्ना विफला इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥

निरन्तरं भगवद्ध्यानतत्परस्य योगिनः स्थितिमाह—

**कौपीनं शतखण्डजर्जरतरं कन्था पुनस्तादृशी**
**निश्चिन्तं सुखसाध्यभैक्ष्यमशनं शय्या श्मशाने वने ।**

**मित्रामित्रसमानताऽतिविमला चिन्ताथ शून्यालये**
**ध्वस्ताशेषमदप्रमादमुदितो योगी सुखं तिष्ठति ॥ १०० ॥**

कौपीनमिति ॥ शतानि अनेकानि खण्डानि शकलानि तैर्जर्जरतरमतिशयेन जर्जरमेवंविधं यस्य कौपीनमाच्छादनं वस्त्रम्, तथा पुनस्तादृशी कौपीनसदृशी कन्था, तथा निश्चिन्तं चिन्तारहितं तथा सुखेन साध्यं भैक्ष्यं यस्मिन्नेवंविधमशनं भोजनम्, श्मशाने वने वा शय्या शयनम्, मित्रामित्रयोः समानता समभावः, अथ अतिविमलाऽतिनिर्मला शून्यालये विजनगृहे चिन्ता ईश्वरध्यानम्, अतः ध्वस्तो निरस्तोऽशेषो मदो गर्वः प्रमादोऽनवधानता च ताभ्यां मुदितो हर्षितः एवंविधः अतः स योगी सुखं तिष्ठति । योगाभ्यासपूर्वकं भगवद्ध्यानपरस्य योगिनो जर्जरकौपीनादिभिश्चित्तवैकल्याभावात्सुखेन स्थितिर्भवतीति भावः । शार्दूलविक्रीडितं वृत्तम् ॥

अचिरस्थायिभोगादिविषये आशां विहाय भगवच्चिन्तनमेव सर्वदा कार्यमिति सूचयन्नाह—

**भोगा भङ्गुरवृत्तयो बहुविधास्तैरेव चायं भव-**
**स्तत्कस्यैव कृते परिभ्रमत रे लोकाः कृतं चेष्टितैः ।**
**आशापाशशतोपशान्तिविशदं चेतः समाधीयतां**
**कामोच्छित्तिवशे स्वधामनि यदि श्रद्धेयमस्मद्वचः ॥ १०१ ॥**

भोगा इति ॥ रे लोकाः, बहुविधा अनेकप्रकारा भोगाः स्त्र्यादिसुखानि भङ्गुरा नाशशीला वृत्तिः प्रवर्तनं येषां ते एवंविधाः सन्तीति शेषः । तैर्भोगैरेव हेतुभूतैरयं भवः संसारो भवति, तत्तस्मात् कस्यैव कृते कस्य सुखस्य प्रयोजनाय, एवशब्दो वाक्यपूरणार्थः । परिभ्रमत धावनं कुरुत, चेष्टितैर्भ्रमणादिव्यापारैः कृतं पर्याप्तम्, यदि अस्मद्वचः श्रद्धेयं श्रद्धार्हं विश्वसनीयमिति यावत् । अस्ति तर्हि कामस्य उच्छित्तिर्नाशो वशे यस्य तस्मिन् कामोच्छित्तिकारिणीत्यर्थः । एवंविधे स्वधामनि स्वप्रकाशे आत्मनि आशापाशानां शतं तस्योपशान्तिस्तया विशदं निर्मलं एवंविधम् आशापाशरहितमिति यावत् । चेतः समाधीयतामेकाग्रीक्रियताम् । शार्दूलविक्रीडितं वृत्तम् ॥

गिरिदर्यादिनिवासपूर्वकमात्मचिन्तनं कुर्वतां पुरुषाणां धन्यतां केवलमनोरथमात्रेण क्रीडादिसुखं चिन्तयतामधन्यत्वं च सूचयन्नाह—

**धन्यानां गिरिकन्दरे निवसतां ज्योतिः परं ध्यायता-**
**मानन्दाश्रुजलं पिबन्ति शकुना निःशङ्कमङ्केशयाः ।**

अस्माकं तु मनोरथोपरचितप्रासादवापीतट-
क्रीडाकाननकेलिकौतुकजुषामायुः परं क्षीयते ॥ १०२ ॥

धन्यानामिति ॥ शकुनाः पक्षिणः, गिरिकन्दरे पर्वतगुहायां निवसतां वासं कुर्वतां तथा परं ज्योतिर्ब्रह्म ध्यायतां चिन्तयतां धन्यानां कृतपुण्यानां अङ्के उत्सङ्गे शेरते ते अङ्कशयाः अङ्के स्थिताः एवंभूताः सन्तः तेषामेव नेत्रेभ्यो निर्गतं आनन्देन हर्षेण यदश्रुजलं बाष्पोदकं तत् निःशङ्कं यथास्यात्तथा पिबन्ति । एतादृशानां धन्यानामेव आयुषः साफल्यमिति भावः । मनोरथेनोपरचितानि कृतानि प्रासादो भवनं, वापीतटं दीर्घिकातटं च । "सरो वापी तु दीर्घिका" इत्यमरः। क्रीडाकाननं क्रीडावनं च तेषु या केलिः क्रीडा तस्याः कौतुकं जुषन्ति ते जुषस्तेषां मनोरथमात्रकल्पितं क्रीडासुखमनुभवतामित्यर्थः । एवंविधानां अस्माकं तु आयुरायुष्यं, परं केवलं क्षीयते क्षीणं भवति तस्माद्वयमधन्या इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥

दैववशाज्जन्मादि यद्यत्प्राप्तं तत्तत्सर्वं मृत्युप्रभृतिभिर्ग्रस्तत्वाच्चिरस्थायि न भवतीति श्लोकद्वयेनाह—

आघ्रातं मरणेन जन्म जरया विद्युच्चलं यौवनं
संतोषो धनलिप्सया शमसुखं प्रौढाङ्गनाविभ्रमैः ।
लोकैर्मत्सरिभिर्गुणावनभुवो व्यालैर्नृपा दुर्जनै-
रस्थैर्येण धृतिर्जगत्यपहृता ग्रस्तं न किं केन वा ॥ १०३ ॥

आघ्रातमिति ॥ मरणेन जन्म आघ्रातमाक्रान्तम्, आघ्रातमित्यस्य विभक्तिविपरिणामेन यथायोग्यमुत्तरत्रान्वयः । तथा जरया विद्युदिव चलं चञ्चलं यौवनं तारुण्यम्, तथा धनस्य लिप्सा लब्धुमिच्छा तया संतोषः, तथा प्रौढा या अङ्गनाः स्त्रियस्तासां विभ्रमैर्विलासैः शमसुखं शान्तिसुखम्, मत्सरिभिः परोत्कर्षासहिष्णुभिः लोकैः गुणाः शीलौदार्यादयः, व्यालैः सर्पैर्वनभुव आरण्यभूमयः, दुर्जनैर्नृपा राजानः, अस्थैर्येणास्वास्थ्येन धृतिर्धैर्यमपहृता, अस्मिन् जगति केन किं न ग्रस्तमपि तु सर्वं ग्रस्तमित्यर्थः । "अस्थैर्येण विभूतिरप्यपहृता" इति पाठे विभूतिरैश्वर्यमित्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥

आधिव्याधिशतैर्जनस्य विविधैरारोग्यमुन्मूल्यते
लक्ष्मीर्यत्र पतन्ति तत्र विवृतद्वारा इव व्यापदः ।
जातं जातमवश्यमाशु विवशं मृत्युः करोत्यात्मसा-
त्तत्किं नाम निरङ्कुशेन विधिना यन्निर्मितं सुस्थितम् ॥ १०४ ॥

आधिव्याधिशतैरिति ॥ विविधैरनेकैर्जनस्य आधयो मानसपीडाः व्याध-

यः शरीररोगाश्च तेषां शतानि तैः आरोग्यं उन्मूल्यते निर्मूलीक्रियते, तथा यत्र लक्ष्मीरस्ति तत्र विविधा आपद आपत्तयः विवृतमुद्घाटितं द्वारं यासां ता एव पतन्ति आगच्छन्ति । अवारिताः प्राप्नुवन्तीत्यर्थः । तथा मृत्युः अवश्यं जातं जातं सर्वं आशु शीघ्रं विवशं यथा स्यात्तथा आत्मसादात्माधीनं करोति, तस्मात् निरङ्कुशेन अप्रतिवद्धेन । दुर्निवारेणेति यावत् । विधिना दैवेन यन्निर्मितमुत्पादितं तत्किं सुस्थितं निश्चलं नाम । अपि तु किमपि सुस्थितं नेत्यर्थः । "सुस्थिरं" इति पाठेऽपि स एवार्थः । शार्दूलविक्रीडितं वृत्तम् ॥

अस्मिन्संसारे किमपि सुखसाधनं नास्तीत्याह—

**कृच्छ्रेणामेध्यमध्ये नियमिततनुभिः स्थीयते गर्भवासे**
**कान्ताविश्लेषदुःखव्यतिकरविषमे यौवने विप्रयोगः ।**
**नारीणामप्यवज्ञाविलसितवदनो वृद्धभावोऽप्यसाधुः**
**संसारे रे मनुष्या वदत यदि सुखं स्वल्पमप्यस्ति किंचित् ॥ १०५ ॥**

कृच्छ्रेणेति ॥ अमेध्यं विण्मूत्रादि मध्ये मध्यभागे यस्य तस्मिन् गर्भवासे नियमिता सङ्कुचिता तनुर्देहो येषां तैः पुरुषैः कृच्छ्रेण कष्टेन स्थीयते । गर्भे दुःखं प्रदर्श्य यौवनवार्धक्ययोरपि दुःखं दर्शयति । कान्तेति । कान्तायाः स्त्रियो विश्लेषो वियोगस्तेन यद्दुःखं तस्य व्यतिकरो मिश्रणं तेन विषमे संभावितसङ्कट एतादृशे यौवने विप्रयोगः स्त्रीवियोगः । भवतीति शेषः । तथा नारीणां स्त्रीणामप्यवज्ञयावमानेन विलसितं विकसितं वदनं भाषणं यस्मिन्नेवंविधो वृद्धभावो वार्धक्यमप्यसाधुरसमीचीनोऽस्ति । अतोऽस्मिन्संसारे रे मनुष्याः यदि स्वल्पमपि सुखं किंचिदस्ति तर्हि वदत ब्रूत । न किंचिदस्तीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥

शतपरिमिते चञ्चले आयुषि किंचिदपि सुखाशा नेत्याह—

**आयुर्वर्षशतं नृणां परिमितं रात्रौ तदर्धं गतं**
**तस्यार्धस्य परस्य चार्धमपरं बालत्ववृद्धत्वयोः ।**
**शेषं व्याधिवियोगदुःखसहितं सेवादिभिर्नीयते**
**जीवे वारितरङ्गचञ्चलतरे सौख्यं कुतः प्राणिनाम् ॥ १०६ ॥**

आयुरिति ॥ नृणां मनुष्याणां आयुः वर्षशतं शतवर्षप्रमाणं परिमितमस्ति, तस्य अर्धं पञ्चाशत्संख्याकं रात्रौ निद्रया गतम्, तस्य पञ्चाशत्संख्याकस्यार्धस्य

अर्धं सार्धद्वादशसंख्याकं पूर्वार्धं परस्य पञ्चविंशतिसंख्याकस्योत्तरार्धस्यापरमर्धं सार्धद्वादशसंख्याकं बालत्ववृद्धत्वयोर्गतम्, तथा व्याधिः रोगः, नियोगः कुटुम्बादिवियोगश्च ताभ्यां यद्दुःखं तेन सहितं शेषं मध्यभागस्थावशिष्टं सेवादिभिः धनिकशुश्रूषादिभिर्नीयते, अतः वारितरङ्गवच्चञ्चलतरे जीवे जीविते। "जीवोऽस्त्री जीविते पुंसि" इति त्रिकाण्डशेषः। प्राणिनां कुतः सुखं स्यात्। न कुतोऽपीत्यर्थः। शार्दूलविक्रीडितं वृत्तम् ॥

दुष्करकर्मकारिणो निःस्पृहान्विवेकिनः पुरुषानभिनन्दन् मनोरथमात्रलब्धेषु धनादिषु स्पृहां कुर्वन्तमात्मानं निन्दन्नाह—

**ब्रह्मज्ञानविवेकिनोऽमलधियः कुर्वन्त्यहो दुष्करं**
**यन्मुञ्चन्त्युपभोगकाञ्चनधनान्येकान्ततो निःस्पृहाः**
**न प्राप्तानि पुरा न संप्रति न च प्राप्ते दृढप्रत्ययो**
**वाञ्छामात्रपरिग्रहाण्यपि परं त्यक्तुं न शक्ता वयम् ॥ १०७ ॥**

ब्रह्मज्ञानेति ॥ ब्रह्मज्ञाने विवेको विचारो येषां ते अतएवामला अज्ञानरहिता धीर्बुद्धिर्येषां ते पुरुषाः तत् दुष्करं दुःखेन कर्तुमशक्यं कर्म कुर्वन्ति। किं तत् एकान्ततो निश्चयेन निःस्पृहा अनभिलाषिणः सन्त उपभोगः स्त्र्यादिसुखं काञ्चनं सुवर्णं च धनानि च तानि मुञ्चन्ति त्यजन्तीति यत्। परंतु पुरा न प्राप्तानि संप्रति वर्तमाने काले न, प्राप्ते च दृढप्रत्ययो दृढविश्वासो न, एवं सत्यपि वयं वाञ्छामात्रेण परिग्रहो येषां तानि धनादीन्यपि त्यक्तुं परं केवलं न शक्ताः न समर्था इत्यहो आश्चर्यम्। शार्दूलविक्रीडितं वृत्तम् ॥

जरादिभिर्व्याप्ते चञ्चले आयुषि प्रतिकूलं कुर्वन्तं पुरुषं शोचन्निवाह—

**व्याघ्रीव तिष्ठति जरा परितर्जयन्ती**
**रोगाश्च शत्रव इव प्रहरन्ति देहम्।**
**आयुःपरिस्रवति भिन्नघटादिवाम्भो**
**लोकस्तथाप्यहितमाचरतीति चित्रम् ॥ १०८ ॥**

व्याघ्रीति ॥ जरा व्याघ्रीव परितर्जयन्ती भर्त्सयन्ती सति अग्रे तिष्ठति, रोगाश्च शत्रव इव देहं प्रहरन्ति प्रहारं कुर्वन्ति। देहः सर्वदा रोगव्याप्तो भवतीत्यर्थः। आयुरायुष्यं भिन्नश्चासौ घटश्च तस्मादम्भ उदकमिव परिस्रवति नश्यति, तथापि लोकोऽहितं प्रतिकूलं कर्म आचरति इति चित्रमाश्चर्यमित्यर्थः। वसन्ततिलका वृत्तम् ॥

सततं परब्रह्मैकतानमनसः पुरुषस्य प्रियालापादिविषयाः संतोषं न जनयन्तीत्याह—

सदा योगाभ्यासव्यसनवशयोरात्ममनसो-
रविच्छिन्ना मैत्री स्फुरति कृतिनस्तस्य किमु तैः ।
प्रियाणामालापैरधरमधुभिर्वक्त्रकमलैः
सनिःश्वासामोदैः सकुचकलशश्लेषसुरतैः ॥ १०९ ॥

सदेति ॥ यस्य सदा निरन्तरं योगस्याभ्यासस्तस्य व्यसनं तेन वशयोरा-धीनयोः आत्मा ब्रह्म मनश्च तयोः अविच्छिन्ना विच्छेदरहिता । निरन्तरेति यावत् । मैत्री स्फुरति प्रकाशते । परब्रह्मणि यस्य मनः सर्वदा संलग्नं भवतीत्यर्थः । तस्य कृतिनः तैः प्रियाणां स्त्रीणामालापैर्भाषणैः, तथा अधरमधुभिरधरोष्ठमधुभिः तथा निःश्वासाः श्वासोच्छ्वासास्तत्संबन्धिनो य आमोदाः सुगन्धास्तैः सहितैः वक्त्रकमलैः, तथा कुचकलशयोः श्लेष आश्लेषस्तत्सहितैः सुरतैर्मैथुनैश्च किमु । न किमपीत्यर्थः । सर्वदा सांसारिकविषयत्यागपूर्वकं ब्रह्मचिन्तनमेव कार्यमिति भावः । शिखरिणी वृत्तम् ॥

सततं परोपकारं कुर्वतामेव जन्म सफलमितरेषां तूदुम्बरान्तर्वर्तिमशकवद्विफलमित्याह—

जातः कूर्मः स एकः पृथुभुवनभरायार्पितं येन पृष्ठं
श्लाघ्यं जन्म ध्रुवस्य भ्रमति नियमितं यत्र तेजस्विचक्रम् ।
संजातव्यर्थपक्षाः परहितकरणे नोपरिष्टान्न चाधो
ब्रह्माण्डोदुम्बरान्तर्मशकवदपरे प्राणिनो जातनष्टाः ॥ ११० ॥

जात इति ॥ स प्रसिद्ध एकः कूर्मः कच्छपो जातः येन पृथु महत् यत् भुवनं तस्य भरो भारस्तस्मै पृष्ठं स्वपृष्ठभागः अर्पितम् । स्वपृष्ठे सकलभुवनभारो धृत इत्यर्थः । तथा ध्रुवस्यौत्तानपादेर्जन्म श्लाघ्यम् । स्तुत्यमस्तीति शेषः । यत्र यदाधारेण नियमितं तेजस्विनां सप्तर्ष्यादीनां चक्रं भ्रमति । नोपरिष्टात् न चाधः । परहितकरणे परोपकारकरणे संजातोऽपि व्यर्थः पक्षः साहाय्यं येषां ते । "पक्षः साहाय्येऽप्युष्णीषे" इत्यमरः । एवंविधा अपरे प्राणिनः ब्रह्माण्डमेवोदुम्बरं तस्यान्तर्मध्ये मशकस्तद्वत् जाताः पश्चान्नष्टाः । जातमात्रेण नष्टा भवन्तीत्यर्थः । न कोऽपि तेभ्यः परोपकारः स्वार्थश्चेति व्यर्थजन्मान इति भावः । स्रग्धरा वृत्तम् ॥

संसारसमुद्रोत्तरणं वाञ्छद्भिः पुरुषैः स्त्रीसङ्गः सर्वथा त्याज्य इत्याह—

**उन्मीलत्त्रिवलीतरङ्गवलया प्रोत्तुङ्गपीनस्तन-**
**द्वन्द्वेनोद्यतचक्रवाकमिथुना वक्त्राम्बुजोद्भासिनी ।**
**कान्ताकारधरा नदीयमभितः क्रूराशया नेष्यते**
**संसारार्णवमज्जनं यदि ततो दूरेण संत्यज्यताम् ॥ १११ ॥**

उन्मीलदिति ॥ हे जनाः, यदि संसारार्णवे संसारसमुद्रे मज्जनमवगाहनं नेष्यते इष्टं न भवति ततस्तर्हि अभित आसमन्ताद्भागे क्रूरा घातुका मकरादिजीवा यस्यां सा, पक्षे क्रूरः कठोर आशयश्चित्तं यस्याः सा, "नृशंसो घातुकः क्रूरः" इति, "कर्कशं कठिनं क्रूरं कठोरम्" इति चामरः । एवंविधायाः कान्तायाः स्त्रिया आकारस्तस्य धरा धारिणी इयं नदी दूरेण दूरतः संत्यज्यताम् । कीदृशी नदी । उन्मीलन्त्यो याः त्रिवलय उदरस्थत्रिवलयस्ता एव तरङ्गवलयास्तरङ्गपङ्क्त्यो यस्यां सा । तथा प्रोत्तुङ्गमुन्नतं पीनं पुष्टं च यत् स्तनद्वन्द्वं कुचयुग्मं तेन उद्यतचक्रवाकयोर्मिथुनं युग्मं यस्यां सा, तथा वक्त्रमेवाम्बुजं कमलं तेन उद्भासिनी शोभमाना । शार्दूलविक्रीडितं वृत्तम् ॥

पञ्चभिर्ज्ञानेन्द्रियविषयैर्वञ्चितचित्तः स्वार्थं चालभमान आक्रोशपूर्वकं तान्निन्दन्नाह—

**इह हि मधुरगीतं नृत्यमेतद्रसोऽयं**
**स्फुरति परिमलोऽयं स्पर्श एष स्तनानाम् ।**
**इति हतपरमार्थैरिन्द्रियैर्भ्राम्यमाणः**
**स्वहितकरणधूर्तैः पञ्चभिर्वञ्चितोऽस्मि ॥ ११२ ॥**

इह हीति ॥ इह लोके मधुरं गीतं गानम्, शब्दरूपो विषय इत्यर्थः । एतन्नृत्यं नर्तनम्, चक्षुर्विषय इत्यर्थः । अयं रसः स्वादुपदार्थास्वादनम्, रसनेन्द्रियविषय इत्यर्थः । अयं परिमलो गन्धः, घ्राणेन्द्रियविषय इत्यर्थः । एष स्तनानां स्पर्शश्च, त्वगिन्द्रियविषय इत्यर्थः । स्फुरतीति सर्वत्र संबध्यते । इति भ्राम्यमाणोऽहं हतो नष्टः परमार्थो यैस्तैः तथा स्वहितस्य करणे धूर्तैर्वञ्चकैः पञ्चभिरिन्द्रियैर्वञ्चितोऽस्मि । मालिनी वृत्तम् ॥

गात्रवैकल्यादिकारिणीं जरां निन्दन्नाक्रोशपूर्वकमाह—

**गात्रं संकुचितं गतिर्विगलिता भ्रष्टा च दन्तावलि-**
**र्दृष्टिर्नश्यति वर्धते बधिरता वक्त्रं च लालायते ।**

**वाक्यं नाद्रियते च बान्धवजनो भार्या न शुश्रूषते**
**हा कष्टं पुरुषस्य जीर्णवयसः पुत्रोऽप्यमित्रायते ॥ ११३ ॥**

गात्रमिति ॥ जीर्णं वयो यस्य एवंविधस्य पुरुषस्य गात्रं शरीरं संकुचितं संकोचं प्राप्तम्, तथा गतिर्गमनं विगलिता नष्टा, च पुनः दन्तावलिर्दन्तपङ्क्तिर्भ्रष्टा पतिता, दृष्टिर्नश्यति, बधिरता बधिरत्वं वर्धते। उच्चैर्घुष्टमपि न श्रूयत इत्यर्थः । वक्त्रं मुखं च लालायते लालावदिवाचरति । अत्र लालावच्छब्दस्तद्वति वर्तते, तस्मात् "कर्तुः क्यङ्"इति क्यङ् । बान्धवजनो वाक्यं वचनं नाद्रियते न स्वीकरोति । "दृङ् आदरे" तुदादिः । तथा भार्या स्त्री न शुश्रूषते न सेवां करोति । पुत्रोऽपि अमित्रायते । अमित्रवदाचरतीत्यर्थः । हा कष्टम्। शार्दूलविक्रीडितं वृत्तम् ॥

इह संसारे जन्मप्रभृति मरणपर्यन्तं तदुत्तरकालमपि च सुखैकलेशोऽपि नास्तीति सूचयन्नाह—

**क्षणं बालो भूत्वा क्षणमपि युवा कामरसिकः**
**क्षणं वित्तैर्हीनः क्षणमपि च संपूर्णविभवः ।**
**जराजीर्णैरङ्गैर्नट इव वलीमण्डिततनु-**
**र्नरः संसारान्ते विशति यमधानीजवनिकाम् ॥ ११४ ॥**

क्षणमिति ॥ नरः पुरुषः नट इव संसारस्य संसरणस्य अन्ते । मरणानन्तरमित्यर्थः । यमधानी यमनगरी सैव जवनिका तिरस्करिणी। लोके "पडदा" इति प्रसिद्धा। "प्रतिसीरा जवनिका स्यात्तिरस्करिणी च सा"इत्यमरः । तां विशति प्रविशति । कीदृशो नरो नटश्च । क्षणं अल्पकालं बालो भूत्वा क्षणमपि कामेषु विषयेषु रसिकः युवा, तथा क्षणं वित्तैर्द्रव्यैर्हीनो रहितः, तथा क्षणमपि च संपूर्णो विभव ऐश्वर्यं यस्य सः, तथा जरया जीर्णानि शिथिलानि तैः अङ्गैर्हस्ताद्यवयवैरुपलक्षितः, तथा वलीभिः उदरस्थत्रिवलीभिः मण्डिता भूषिता तनुः शरीरं यस्यैवंविधः नटो यथा नानाविधभूमिका गृहीत्वा अन्ते जवनिकां प्रविशति तद्वदयं नरोऽपि बालत्वादिभूमिका गृहीत्वा यमपुरीजवनिकां प्रविशतीति भावः । शिखरिणी वृत्तम् ॥

विक्षेपकशास्त्रार्थविचाराद्यभिलाषरहितेन मनसा शिवचिन्तनमेव कर्तव्यमित्यर्थं स्वमनःस्थितिप्रदर्शनेन सूचयन्नाह—

**प्रशान्तशास्त्रार्थविचारचापलं निवृत्तनानारसकाव्यकौतुकम् ।**
**निरस्तनिःशेषविकल्पविप्लवं प्रपत्तुमन्विच्छति शूलिनं मनः ॥ ११५ ॥**

प्रशान्तेति ॥ प्रशान्तं शास्त्रार्थस्य विचारे चापलं चांचल्यं यस्य तत्। शास्त्रार्थविचारे विषये चांचल्यरहितमित्यर्थः। नाना अनेका रसा येषु एवं-विधानि यानि काव्यानि तेषां कौतुकं। निवृत्तं नानारसकाव्यकौतुकं यस्य तत्। नानाविधकाव्यदर्शने कौतुकरहितमित्यर्थः। निरस्तो निःशेषो विकल्पानां विक्लवं उपद्रवो यस्य तत्, निःशेषविकल्परहितमित्यर्थः। एवंविधं मे मनः शूलिनं शिवं प्रपत्तुं शरणीकर्तुमन्विच्छति वाञ्छति। "प्रयत्तं" इति पाठे मनोविशेषणम्। प्रयत्तं प्रयत्नवदित्यर्थः। "यती प्रयत्ने" इत्यस्य निष्ठान्तस्य रूपम्। वंशस्थं वृत्तम् ॥

भोगादेः सर्वस्य सभयत्वात् सर्वथा निर्भयं वैराग्यमेवाश्रयणीयमित्याशये-नाह—

> भोगे रोगभयं कुले च्युतिभयं वित्ते नृपालाद्भयं
> मौने दैन्यभयं बले रिपुभयं रूपे जराया भयम्।
> शास्त्रे वादभयं गुणे खलभयं काये कृतान्ताद्भयं
> सर्वं वस्तु भयान्वितं भुवि नृणां वैराग्यमेवाभयम् ॥ ११६ ॥

भोग इति ॥ भोगे स्त्र्यादिसुखे रोगात् भयं भीतिरस्तीति शेषः। एवमुत्तरत्रापि बोध्यम्। कुले सत्कुले च्युतिभयं विपरीतमाचरद्भ्यः स्त्रीपुत्रादिभ्यो भ्रंशभयम्, वित्ते धने नृपालाद्राज्ञः सकाशाद्भयम्। समयविशेषे राजा परिहरिष्यतीति भयमित्यर्थः। मौने मौनवृत्त्यां दैन्याद्दीनतायाः भयम्, दीनतया मौनं भ्रश्येदिति भयमित्यर्थः। बले शौर्ये रिपोः शत्रोः सकाशाद्भयम्, युद्धादि-प्रसङ्गेनेत्यर्थः। रूपे सौन्दर्ये जरायाः सकाशात् भयम्, जराया सौन्दर्यभ्रंश-भयमित्यर्थः। शास्त्रे वादात् भयम्, वादे सति जयपराजययोरनित्यत्वादित्यर्थः। गुणे खलाद्दुर्जनाद्भयम्, खलस्य गुणेषु दोषारोपस्वभावत्वादित्यर्थः। काये देहे कृतान्ताद्यमाद्भयम्, एवं सर्वं वस्तु भुवि पृथिव्यां भयेनान्वितं युक्तमस्ति, परंतु नृणां वैराग्यमेव अभयं, निर्भयमस्तीत्यर्थः। अयमेव श्लोकः पाठान्तरेण दृश्यते। स यथा—भोगे रोगभयं सुखे क्षयभयं वित्तेषु भूभृद्भयं दासे स्वामिभयं जये रिपुभयं वंशे कुयोषिद्भयम्। माने म्लानिभयं गुणे खलभयं काये कृता-न्ताद्भयं सर्वं नाम भयास्पदं भगवतो विष्णोः पदं निर्भयम् ॥ इति। अस्यार्थः स्पष्ट एवेति कृत्वा न लिख्यते। शार्दूलविक्रीडितं वृत्तम् ॥

> वैराग्यशतकव्याख्यामर्थद्योतनिकाभिधाम्।
> कृष्णः कुर्यामहं तेन प्रीयतां ज्ञानदः शिवः ॥ १ ॥

प्रख्याते भुवि शालिवाहनशकेऽब्धाकाशधृत्यन्विते
वर्षे पार्थिवनामके रविदिने तैषेऽसिते पक्षके ।
द्वादश्यां शतकत्रयस्य विवृतिः पूर्णत्वमागादिय-
मर्थद्योतनिकाभिधाऽबुधजनोद्बोधाय या दीपिका ॥ २ ॥

इति श्रीमहावळोपाभिधकृष्णसूरिविरचितायामर्थद्योतनिकाभि-
धायां टीकायां वैराग्यशतकं संपूर्णम् ॥ ३ ॥

---

